# सारमञ्जरी ।



महामहोपाध्याय-

श्रीजयकृष्णतर्कालङ्कारेण विरचिता ।


पण्डितकुलपति-

वि, ए, उपाधि-धारि-

श्रीमज्जीवानन्द-विद्यासागर-भट्टाचार्य्यात्मजेन

पण्डित-श्रीयुक्त-आशुबोध-विद्याभूषणेन

कृतया परिवर्द्धितव्याख्यया समलङ्कृता ।

तदङ्गसम्भवेन एम, ए, वि, एल, इत्युपाधिकेन

पण्डित-गोपञ्चानन-तर्कपञ्चाननेन

संस्कृता प्रकाशिता च ।


द्वितीय संस्करणम् ।


कलिकातामहानगर्य्याम्

वाचस्पत्ययन्त्रे

मुद्रिता ।

ई १९३५ ।

# शब्दार्थसारमञ्जर्य्यां क्रमोक्तविषयाणां निर्घण्टः ।

# सारमञ्जरी।



(१) हेरम्बचरणद्वन्द्वं विघ्ननाशकरं परम्।
प्रणम्य जयकृष्णेन क्रियते सारमञ्जरी॥

(२) तत्र प्रथमतः कालत्रय-निरूपणम्।

(३) वर्त्तमानध्वंसप्रतियोगित्वञ्च अतीतत्वम्।

---

नत्वाऽऽदावरविन्दसुन्दररुचिं वागीश्वरीं सिद्धये
शब्दानामनुशासनं सरलया वाचा स्फुटं दर्शयन्।
व्याचष्टे जयकृष्णसूरिरचितां सारादिमां मञ्जरीं
विद्याभूषणशेषनामसहितो विप्राशुबोधः सुधीः॥

इह खलु व्याकरणं नाम शब्दानुशासनम् "अथ शब्दानुशासनम्" इति भाष्योक्तेः। किञ्च "एकः शब्दः सुप्रयुक्तः सम्यग्ज्ञातः स्वर्गे लोके कामधुक् भवति" इत्यादि वेदवाक्येभ्यश्च सुप्रतीतमेव शिष्टशब्दानामुपादेयत्वम्। तत्र किल शब्द-प्रयोगावबोधे वैयाकरणसाराशस्यैव प्रतिनियन्तृत्वात् सुकुमारमतीनामशेषतो वैयाकरणसिद्धान्तबुभुत्सूनां सुखावगमाय सारमञ्जर्य्याख्यं ग्रन्थं चिकीर्षुस्तर्कालङ्कारो निर्विघ्नेन प्रारिप्सितपरिसमाप्तिकामोऽविगीतशिष्टाचारविषयं विघ्नविनाशकविनायकप्रणामरूपं मङ्गलमाचरन्नाह, प्रणम्येति।—विघ्ननाशकर "परं" श्रेष्ठं हेरम्बचरणद्वन्द्वं प्रणम्य, तर्कालङ्कारोपाधिकेन जयकृष्णशर्मणा, इयं वक्ष्यमाणा "सारमञ्जरी" साराणां, व्याकरणशास्त्रस्येति शेषः, मञ्जरी गुच्छः, सा यत्र एवम्भूता पुस्तिकेत्यर्थः, क्रियते॥ १॥

तत्रादौ सर्वनियामकतया कालमेव निरूपयति, तत्रेति।—"तत्र" निरूपणीयेषु। कालस्यापरिच्छिन्नस्यापि तद्वृत्त्यतीतत्वानागतत्वादिवस्तुभेदेन त्रित्वं सङ्गच्छते॥ २॥

वर्त्तमानेत्यादि।—"वर्त्तमानध्वंसप्रतियोगित्वम्" आरब्धपरिसमाप्त-

**(४) वर्त्तमानप्रागभावप्रतियोगित्वं भविष्यत्त्वम्।**
**(५) स्वावच्छिन्नकालवृत्तित्वं वर्त्तमानत्वम्।**

---

त्वमित्यर्थः। अत्र वर्त्तमानपदानुपादाने पाकानुकूलवर्त्तमानकृतिदशायाम् अपाक्षीदिति प्रयोगापत्तिः स्यात्, उत्तरकाले तादृशवर्त्तमानकृतेर्ध्वंस-सम्भवेन ध्वंसप्रतियोगित्वस्य तत्र सत्त्वात्। स किलातीतः कालोऽद्यतना-नद्यतनभेदेन द्विविधः। अतीताया रात्रेः पश्चार्द्धेन आगामिन्याः पूर्वार्द्धेन सहितो यः कालः तत्र वृत्तिर्ध्वंसप्रतियोगी अद्यतनातीतः, तदतिरिक्तः अनद्यतन इति ॥ ३ ॥

वर्त्तमानेति।—वर्त्तमानकालोत्तरकालोत्पत्तिकत्वम् इत्यर्थः। अत्रापि वर्तमानपदानुपादाने पाकानुकूलवर्त्तमानकृतिदशायां पक्ष्यतीति प्रयोगा-पत्तिः स्यात्, तादृशवर्त्तमानकृतेः पूर्वकालावच्छेदेनात्मनि प्रागभावसत्त्वेन प्रागभावप्रतियोगित्वस्य तत्र सत्त्वात् ॥ ४ ॥

स्वावच्छिन्नेत्यादि।—प्रयोगसमानकालीनत्वम् आरब्धापरिसमाप्तत्वं वा तदर्थः। येन वस्तुना यः कालोऽवच्छिद्यते स तस्य वर्त्तमानः, यथा—इदानीं घटो वर्त्तते इत्यत्र घटो वर्त्तमान इति शाब्दबोधः। अत्र स्वावच्छिन्नत्वविशेषणानुपादाने पाकानुकूलातीतादिकृतिदशायामपि पचतीति प्रयोगापत्तिः स्यात्, तादृशातीतादिकृतौ कालवृत्तित्वसत्त्वात्; स्वप्रयोगाधिकरणकालवृत्तित्वं तन्निष्कृष्टार्थः। एवं तत्तदाख्यातप्रत्ययत्वे-नाभिमतम्। स वर्त्तमानः पुनश्चतुर्द्धा भिद्यते, तथा हि—"प्रवृत्तोपरतश्चैव वृत्ताविरत एव च। नित्यप्रवृत्तः सामीप्यः वर्त्तमानश्चतुर्विधः ॥" इति। क्रमेणैतेषामुदाहरणं यथा—मांसं न खादति, आदौ मांसभोजनप्रवृत्तः परतः उपरतः इत्यवगमः। इह कुमाराः क्रीड़न्ति, तदानीन्तनक्रीड़ा-ऽभावेऽपि पूर्वक्रीड़ानां बुद्धौ वर्त्तमानत्वात्। पर्वतास्तिष्ठन्ति नित्यप्रवृत्त-त्वात्; किञ्च पर्वतानां स्थितत्वेन वर्त्तमानत्वेऽपि भूतभविष्यत्कालाभ्यां सम्बन्धविवक्षया पर्वतास्तस्थुः स्थास्यन्ति इत्यपि स्यात्। सामीप्यश्च पुनर्द्विविधः, भूतसामीप्यः भविष्यत्सामीप्यश्च। भूतसामीप्यो यथा—

(६) अथ लकारादेः शक्तिनिरूपणम्। तत्र लटो वर्त्तमानत्वम्। विधिलिङो भविष्यत्त्वं (७) विधिः सम्भावना च। विधिः कर्त्तव्यतोपदेशः। (८) सम्भावना कल्पनम्। लोटो भविष्यत्त्वम् आशीः प्रेरणा च। आशीः शुभचिन्तनम्। प्रेरणं प्रवर्त्तनम्। आशीर्लिङो भविष्यत्त्वम् आशीश्च। लुट्लृटो-र्भविष्यत्त्वम्। तव्यानीययोर्भविष्यत्त्वं विधिश्च।

---

कदा आगतोऽसीति प्रश्ने अध्वखेदादेर्वर्त्तमानत्वात् एषोऽहमागच्छामीति आगतोऽपि वदति। भविष्यत्सामीप्ये यथा—कदा गमिष्यसि इति प्रश्ने एषोऽहं गच्छामीति गमने क्रियमाणोद्यमो वदतीति ॥ ५ ॥

अथेत्यादि।—"अथ" काललयनिरूपणानन्तरं कालविशेषवाचक-लड़ादीनां शक्तिं निरूपयति। लकाराः खलु दशविधाः, लट् लिट् लुट् लृट् लेट् लोट् चेति टकारेताः षट्। लङ् लिङ् लुङ् लृङ् इति ङितश्चत्वारः इति। तत्कालङ्कारियोतेषां विशेषतः प्रयोगस्थानानि उदाह्रियन्ते विशदम्; अत्राह हरिः,—"वर्त्तमाने परोक्षे श्वो भाविन्यर्थे भविष्यति। विध्यादौ प्रेरणादौ च भूतमात्रे लड़ादयः। सत्यां क्रिया-ऽतिपत्तौ च भूते भाविनि लृङ् स्मृतः॥" इति ॥ ६ ॥

विधिरिति।—विधिर्नाम प्रेरणमिति भाष्यकारः, भृत्यादेः कस्याञ्चित् क्रियायां नियोजनमिति च तदर्थः। यथा—अग्निहोत्रं जुहुयात् स्वर्गकाम इति ॥ ७ ॥

सम्भावनेति।—"सम्भावनं" क्रियासु योग्यताऽध्यवसायः; तच्च सम्भावनं समर्थं इति चेत् भवति, तदा लिङ् स्यादित्यर्थः। अत्र सूत्रं—"सम्भावनेऽलमिति चेत् सिद्धाप्रयोगे" (३।३।१५४ पा०)। अपि गिरिं शिरसा भिन्द्यात् अत्र सम्भावनाद्योतकोऽपि शब्दः। गिरिविदारणे पर्य्याप्त इति सम्भावनाऽत्र गम्यते ॥ ८ ॥

लङ्लुङोरतीतत्वम्। (९) लिटो वक्तृपरोक्षत्वमतीतत्वञ्च। (१०) लृङोऽतीतत्वं क्रियातिक्रमश्च। कुतश्चिद्वैगुण्यात् क्रियाया अनिष्पत्तिः क्रियाऽतिक्रमः। (११) यङः क्रियासमभिव्याहारोऽतिशयितत्वञ्च।

लिट इत्यादि।—लिटोऽनद्यतनभूतत्वं पारोक्ष्यञ्चार्थः। पारोक्ष्यन्तु चक्षुरादीन्द्रियाणामविषयत्वं, साक्षात्कारभिन्नविषयत्वमिति यावत्, तेन हि साक्षात्कृतव्यापारे न लिट्प्रयोगः। ननु अहं पपाचेत्यादौ उत्तमपुरुषे कथं लिट्प्रवृत्तिः? इह खलु प्राचीनैरुक्तं चित्तव्यासङ्गादिति। ततः साक्षात्करोमीत्यादिज्ञानाविषयत्वमिति फलितार्थः॥ ९॥

लृङ इति।—लृङो भूतत्वं भविष्यत्त्वं जन्यजनकत्वञ्चार्थः, "लिङ्निमित्ते लृङ् क्रियाऽतिपत्तौ" (३।३।१३९ पा०) इति सूत्रात्। क्रियाऽतिपत्तिः क्रियाया धात्वर्थस्यातिक्रमेण पतनं सम्भावनमित्यर्थः। यद्देशे यत्काले वा क्रियायाः सम्भवः तदन्यस्मिन् देशे काले वा तत्सम्भावनं, प्रसञ्जनमिति यावत्। उदाहरणं यथा,—यदि वर्षसहस्रमजीविष्यं, तदा पुत्रशतमजनयिष्यम् इति॥ १०॥

यङ इत्यादि।—क्रियायाः "समभिव्याहारः" पौनःपुन्यं, तच्च प्रकृतधात्वर्थजातीयक्रियोत्तरतादृशक्रियाऽऽनन्तर्य्यरूपं, तच्च प्रकृत्यर्थे विशेषणत्वेनान्वेति; यथा,—पापच्यते इत्यादौ प्रकृतधात्वर्थः पाकक्रिया, तज्जातीयक्रिया पाकक्रियैव, तदुत्तरवर्त्तिनी तादृशक्रिया अर्थात् तज्जातीयक्रिया पाकक्रियैव, तदानन्तर्य्यं तादृशपाकक्रियाध्वंसाधिकरणकालवृत्तित्वं, तेन पाकोत्तरपाकानन्तर्य्यवत्पाककृतिमानिति शाब्दबोधः, एवञ्च पाकक्रियाया यथोत्तरं प्रवृत्तिस्थले एव पापच्यते इति व्यवहारः, पुनः पुनः पचतीति विवरणम्। द्विः पक्तरि पुनः पक्तृत्वेऽपि न निरुक्तं पुनः पुनः पक्तृत्वं,पाकक्रियाया विभिन्नत्वेन तज्जातीयत्वविरहात्। पाकोत्तरत्वादिकञ्च पाकसमानकर्त्तृकत्वगर्भं, तेन पुरुषान्तरीयपाकाद्युत्तरत्वमादाय पापच्यते इति न प्रयोगप्रसङ्गः। "अतिशयितत्वञ्च" भृशार्थः, तथा च, प्रधानक्रियाणामतिशयितत्वे भृशत्वे यङ् भवति,तथा हि,जाज्वल्यते इत्यादौ

## (१२) सनो धात्वर्थविषयिणीच्छा, समानकर्तृकत्वेऽभिधानम्। (१३) णिचः कर्त्तृत्व-प्रयोजकव्यापारो

भृशं ज्वलतीत्येवार्थः। केचित्तु प्रधानक्रियायां प्रधानक्रियोपकारकाणामधिश्रयणादीनां वा भृशतास्थले यङ् भवति, पाकाभावस्थले जाज्वल्यते इत्यपि प्रयोगः, तत्र प्रधानक्रियायां भृशता ; एवं पाकस्थलेऽपि जाज्वल्यते इति प्रयोगः, तत्र प्रधानीभूतपाकक्रियोपकारकज्वलनस्य भृशता, अत एव तत्र तत्र भृशं ज्वलतीत्येवार्थः, न तु पुनः पुनर्ज्वलतीति प्राहुः ॥ ११ ॥

सन इति।—"धात्वर्थविषयिणी" सन्-प्रत्यय-प्रकृतिभूतधात्वर्थविषयिणी या इच्छा सैव सनोऽर्थः, "समानकर्तृकत्वे" धात्वर्थस्य इच्छासमानकर्तृकत्वे सनोऽभिधानमित्यर्थः। यथा—पाकं चिकीर्षतीत्यादौ द्वितीयार्थस्य विषयत्वस्य मूलधात्वर्थे कृतावन्वयः, पाकान्वितमूलधात्वर्थकृतेः स्वसमानकर्तृकत्व-स्वविषयत्वरूपसम्बन्धाभ्यां सन्नर्थेच्छायामन्वयः ; तथा च, पाकविषयताककृतिसमानकर्तृकताद‍ृशकृतिविषयकेच्छावानिति शाब्दबोधः। एवं पक्तुमिच्छतीति वाक्यात् पिपक्षतीत्यादौ तुम्-प्रकृतिभूतपचधात्वर्थस्य विषयत्व-समानकर्तृकत्वरूपसम्बन्धाभ्यामिच्छायामन्वयात् पाकसमानकर्तृकपाकविषयकेच्छावानिति बोधः। अत एव गृहं तिष्ठासतीत्यादि प्रयोगस्य नापत्तिः, धात्वर्थस्थितेरकर्मकतया गृहकर्मकत्वस्य तत्र बाधात्, परन्तु गृहे तिष्ठासतीत्येव प्रयोगः साधुः। सनर्थेच्छायां द्वितीयान्तलभ्यस्य पाकविशेष्यताकत्वस्य स्वरूपसम्बन्धेन, धात्वर्थस्य कृत्यादेः स्वसाध्यत्वप्रकारवन्निष्ठस्वसमानकर्तृकत्वसम्बन्धेनान्वयोपगमे तु गृहविशेष्यिका स्थितिप्रकारकेच्छा बोधयन् ताद‍ृशप्रयोगः प्रमाणं स्यात्। अत्र स्वसमानकर्तृकत्वनिवेशादन्यदीयकृतिपाकादेरिच्छावति अयं चिकीर्षति पिपक्षतीत्यादि प्रयोगस्य नापत्तिः। अत्रेदं बोध्यं—यत्र चिकीर्षादेः प्रवृत्त्यादिरूपेष्टसाधनत्वं तत्र चिकीर्षादिगोचरेच्छासत्त्वेऽपि इच्छार्थकसनन्तात् न सन्-प्रत्ययः "सनन्तान्न सनिष्यते" इत्यनुशासनात् चिकीर्षिषतीत्यादिको न प्रयोगः ॥ १२ ॥

णिच इत्यादि।—"कर्त्तृत्वप्रयोजकः" प्रयोज्यकर्तृनिष्ठं यत् कर्त्तृत्वं कृत्यनुकूलव्यापारः तस्य प्रयोजकः सम्पादकः, "व्यापारः" प्रेषणादिकः,

## हेतुमानर्थः। (१४) लटो वर्त्तमानत्वम्।

"हेतुमान्" स्वनिष्ठाधारतानिरूपिताधेयतासम्बन्धेन हेतुर्यत्रास्ति स हेतुमान् हेतुवृत्तिरित्यर्थः, प्रयोजककर्त्तृनिष्ठ इति यावत्, तथा च, हेतुनिष्ठः कर्त्तृत्वप्रयोजकव्यापारः णिच्-प्रत्ययस्यार्थः। तत्र च प्रयोजककर्त्तुरेव हेतुसंज्ञा कर्त्तृसंज्ञा च बोध्या, "तत्प्रयोजको हेतुश्च" (१।४।५५) पाणिनिसूत्रं, तदर्थस्तु—"तस्य" कर्त्तुः, प्रयोज्यकर्त्तुरित्यर्थः, "प्रयोजकः" प्रेरकः, तथा च, प्रयोज्यकर्त्तृव्यापारानुकूलव्यापारवान् हेतुसंज्ञः कर्त्तृसंज्ञश्च स्यादिति। तत्र च शास्त्रान्तरमपि—"प्रेषणाध्येषणे कुर्वन् तत्समर्थानि वाऽऽचरन्। कर्त्तैव विहितः शास्त्रे हेतुसंज्ञां प्रपद्यते॥" इति। तत्र च "तत्समर्थानि" तस्य णिच्प्रकृतिभूतधात्वर्थस्य सम्पादनसमर्थानि कार्य्याणि आचरन्; एतेन अचेतनादेरपि तादृशकार्य्याचरणानुकूलत्वेन कर्त्तृत्वं बोध्यते। एवञ्च प्रयोज्यकर्त्तृनिष्ठकर्तृत्व(कृत्यनुकूलव्यापार)प्रयोजकव्यापारः प्रेषणादिः प्रयोजककर्त्तृनिष्ठ इति णिच्-प्रत्ययस्य निष्कृष्टार्थः। तथा च, देवदत्तः यज्ञदत्तेन पाचयतीत्यत्र यज्ञदत्तनिष्ठपाककर्त्तृत्वप्रयोजकप्रेषणादिरूपव्यापारवान् देवदत्त इति शाब्दबोधः। अचेतनस्य प्रयोजककर्त्तृत्वस्थले भिक्षा वासयति भिक्षुकं, सङ्ग्रामो वासयति वीरमित्यादिस्थले भिक्षुकादिनिष्ठवासादिकर्त्तृत्वप्रयोजकव्यापारः प्रचुरतरभिक्षालाभादिजन्यतृप्तिविशेषः, तत्सम्पादकत्वेन तादृशव्यापारवती भिक्षा इति बोधः। चुरादिभ्यस्तु स्वार्थे णिचः स्तेयादिरूपोऽर्थः, तेन चोरयतीत्यादौ सम्भेदेनान्यतरवैयर्थ्यानियमेन स्तेयादिरूपस्य णिजन्तधात्वर्थस्यानुकूलकृतिमानिति बोधः। केचित्तु धातुप्रकृतिकस्य णिचोऽनुकूलव्यापारः व्यापारमात्रं वाऽर्थः, शाब्दबोधे अपदार्थस्य संसर्गविधयैव भानस्वीकारेण व्यापारमात्रार्थे धात्वर्थस्यानुकूलता संसर्गेण भानसम्भवात्; एवञ्च चैत्रं भावयति आत्मानं गमयतीत्यादौ चैत्रोत्पत्त्यनुकूलव्यापारवान् आत्मगत्यनुकूलव्यापारवान् इत्यादि शाब्दबोधः। क्वचित् ज्ञानानुकूलव्यापारोऽपि णिचोऽर्थः, यथा—कथकः कंसं घातयतीत्यादौ कंसहननज्ञानानुकूलाभिनयादिरूपव्यापारवान् कथक इति बोध इति प्राहुः॥ १३॥

लटो वर्त्तमानत्वमिति।—"वर्त्तमानत्वं" स्वावच्छिन्नकालवृत्तित्वं स्व-

(१५) शतृ-शानयोर्वर्त्तमानत्वमेककर्तृकत्वम् एककालीनत्वञ्च। क्त-क्तवतु-प्रत्यययोरतीतत्वम्।
(१६) तुम्-णकोः क्रियार्था क्रिया एककर्तृक-

---

प्रयोगाधिकरणकालवृत्तित्वं वाऽर्थः। ज्ञाता इत्यादौ तु गाश्रयत्वार्थकतायाः क्त. कृमत्वेन कर्त्तृकतस्य कृताविव शक्तेः तृजर्थवर्त्तमानत्वस्य तु तादृशकृताविवान्वयात् पक्ता गन्तेत्यादौ पाकानुकूलवर्त्तमानकृत्याश्रयः, गमनानुकूलवर्त्तमानकृत्याश्रय इत्यादि बोधनिर्वाहः। "शीलाचारसाधुषु वर्त्तमाने तृङ्" इति सङ्क्षिप्तसारसूत्रे क्रमदीश्वरेण तृङो वर्त्तमानत्वार्थाभिधानात्, मुग्धबोधे च "तृणकौ घे" इति सूत्रव्याख्यायां "वर्त्तमानकालेऽभिधानात्" इत्यादेः रामतर्कवागीशेनाभ्युक्तत्वाच्च तृचो वर्त्तमानत्वार्थकत्वं नाप्रामाणिकम्। शीलार्थे तृचो विधानात् योद्धारो गच्छन्ति, पक्तारो गच्छन्तीत्यादिप्रयोगस्य युद्धपाकाद्यनुकूलवर्त्तमानकृत्यभावेऽपि योद्धादीनां युद्धपाकादिशीलतया अपचत्यपि सूपकारे पचनयोग्यतया पाचक इति प्रयोगवत् नानुपपत्तिः॥ १४॥

शतृ-शानयोरिति।—शतृ-प्रत्ययस्य शान-प्रत्ययस्य चेत्यर्थः। "एककर्तृकत्वं" शतृ-शानप्रत्यययोः प्रकृतिभूतधात्वर्थस्य यः कर्त्ता स एव मुख्यक्रियायाः कर्त्ता तादृशधात्वर्थयोः समानकर्तृकत्वमित्यर्थः। "एककालीनत्वं" तादृशधात्वर्थयोरेककालवृत्तित्वमर्थः। इत्थञ्च पचन् तिष्ठति अर्जयन् तिष्ठतीत्यादौ शतृ-प्रत्ययेन पचनार्जनयोर्वर्त्तमानत्वं पचनावस्थानयोरर्जनावस्थानयोश्च समानकर्त्तृकर्तृकत्वं समानकालीनत्वञ्च प्रतीयते। शतृ-शानप्रत्यययोर्वर्त्तमानत्वार्थकत्व एककालीनत्वार्थकत्वं निष्प्रयोजनकमिति न वक्तव्य, वसन् ददर्शेत्यादौ अतीतवासकर्तृकर्तृकं दर्शनमित्यर्थप्रतीतेः, तत्र वासे वर्त्तमानत्व न प्रतीयते अपि तु अतीतत्वमेव, सुतरां वासदर्शनयोः समानकालीनत्वं प्रतीयते। तत्र च "धातुसम्बन्धे प्रत्ययाः" (३।४।१) इति पाणिनिसूत्रं प्रमाणम्॥ १५॥

तुम्-णकोरिति।—तुम्-प्रत्ययस्य णक प्रत्ययस्य चेत्यर्थः। एतत्तु कालाप-

**त्वञ्च, उद्देश्यतासम्बन्धेन क्रियानिमित्तीभूतक्रिया क्रियार्था। (१७) क्तिन्-घञ्-ल्युटां कालसामान्यो भावश्च, भावो धात्वर्थः। (१८) क्त्वाच्-ल्यपोर्भाव**

मते ; पाणिनिमते तु तुमुन्-ण्वुलौ, मुग्धबोधमते तु तुम्-णकौ बोध्यौ।

क्रियार्था क्रियेति।—"क्रिया" धात्वर्थः, स "अर्थः" प्रयोजनं यस्या एवम्भूतायां क्रियायामुपपदीभूतायां गम्यमानायां भविष्यत्काले उपपदीभूतक्रियायाः प्रयोजनीभूतक्रियायाश्च समानकर्त्तृकत्वे च प्रयोजनीभूतार्थकधातोर्भावे तुम् कर्त्तरि वुण् प्रत्ययौ भवत इति पाणिनिप्रभृतयः। ग्रन्थकृन्मते तु "यत् यदुद्दिश्य प्रवर्त्तते, तत् तस्य प्रयोजनम्" इति नियमात् उद्देश्यतया क्रियाया "निमित्तीभूता" प्रयोजनीभूता या क्रिया सैव क्रियार्था क्रियेत्यर्थः, तथा च, यस्य धातोरर्थः समानकर्त्तृकस्यान्यधात्वर्थस्य प्रयोजनं भवति तस्मात् धातोर्भविष्यति काले भावे तुम् कर्त्तरि वुण् भवतीति तात्पर्य्यम्। यथा—कृष्णं द्रष्टुं याति, कृष्णं दर्शको यातीत्यादौ स्वकर्त्तृकं कृष्णकर्मकं यत् भविष्यद्दर्शनं तत्प्रयोजनगमनाश्रय इति तदुद्देश्यकगमनाश्रय इति वा शाब्दबोधः। अत्र च दर्शनक्रियायां गमनक्रियाया उद्देश्यतया निमित्तत्वेन दृशधातोरुत्तरं तुम्-वुणौ बोध्यौ। अत्र क्रियार्थायामित्युपादानात् धावतस्ते पतिष्यति दण्ड इत्यादौ धावनक्रियायां दण्डपतननिमित्तत्वेऽपि न तु तदुद्देश्यतया तन्निमित्तत्वं, क्रियायामित्युपादानात्। भिक्षिष्ये इत्यस्य जटा इत्यादेः भिक्षां लप्स्ये इति कृत्वा अस्य जटा वर्त्तते इत्यर्थः ; तथा च, तत्र भिक्षोद्देश्येन जटाधारितया भिक्षायामुद्देश्यतया जटानिमित्तत्वेऽपि जटा न क्रिया, अपि तु द्रव्यविशेष इति। तत्र, तत्र धावनार्थकस्य भिक्षार्थकस्य च धातोरुत्तरं न तुम्-वुणोः प्रसक्तिः॥ १६॥

क्तिन् इति।—क्तिन्-घञ्-ल्युटां "कालसामान्यः" भूत-भविष्यद्वर्त्तमानानामन्यतमः कालः, "भावश्च" धात्वर्थश्चार्थः ; तथा च, भावविहितप्रत्ययानां स्वरूपार्थकत्वं समभिव्याहृतधात्वर्थवृत्त्यसाधारणधर्मपरत्वं बोध्यं, तेषां निरर्थकत्वे तु पाकं पश्येत्यादौ सुबर्थे धात्वर्थान्वयस्याव्युत्पन्नतया धात्वर्थस्य पचनादेः कर्मत्वादावन्वयानुपपत्तिः स्यात्॥ १७॥

आनन्तर्य्यं, क्रियासमानकर्तृकत्वमपीति सङ्क्षेपः।

(१९) अथ लकारस्थानीयतिङाम् आख्यातपदवाच्यत्वम्। स च आख्यातस्त्रिविधः, कर्तृविहितः, कर्मविहितः, भावविहितश्चेति। अथ

---

क्त्वाच्-ल्यपोरिति।—क्त्वाच्-प्रत्ययस्य क्त्वाच् स्थाने जात-ल्यप्-प्रत्ययस्य चेत्यर्थः। "भाव." धात्वर्थः। "आनन्तर्य्यम्" उत्तरत्वम्। "क्रियासमानकर्तृकत्वं" मुख्यक्रियायाः क्त्वाच्प्रत्ययान्तप्रतिपाद्यक्रियायाश्च एककर्तृकत्वमित्यर्थः। तथा हि, विष्णुं नत्वा प्रणम्य वा स्तौति विप्र इत्यादौ विष्णुविषयकस्तुतिसमानकर्तृकनत्युत्तर( प्रणत्युत्तर )कालवर्त्तमानस्तुत्यनुकूलव्यापाराश्रयो विप्र इति शाब्दबोधः। क्वचित् तादृशक्रिययोः समानकालीनत्वमपि तदर्थः; यथा—मुखं व्यादाय स्वपितीत्यादौ निद्रासमानकालीनं तत्समानकर्तृकं मुखकर्मताकं व्यादानम्, अत एव तादृशव्यादानसमानकालीनस्वापानुकूलव्यापाराश्रय इति शाब्दबोधः। ननु कथं मृतं दृष्ट्वा दुःखं भवति, प्रियं दृष्ट्वा सुखं भवतीत्यादौ दर्शनक्रियाया उत्पत्तिरूपभवनक्रियायाश्च भिन्नकर्तृकतया क्त्वाच्-प्रत्ययस्य साधुता? इति चेन्न; स्थितादिपदाध्याहारेण स्थित्यादिक्रियया समानकर्तृकत्वनिर्वाहात्; तथा हि, मृतं प्रियं वा दृष्ट्वा स्थितस्य दुःखं सुखं वा भवतीति तत्र बोधः; एवञ्च तत्र दर्शनक्रियायाः स्थितिक्रियायाश्च समानकर्तृकत्वं बोध्यम्॥ १८॥

अथ लकारस्थानीयेत्यादि।—"लकारस्थानीयानां" लट्लोड़ादिदशविधलकारप्रतिपाद्यानां "तिङां" तिङादिमाशीतिशतसङ्ख्यकप्रत्ययानाम् "आख्यातपदवाच्यत्वम्" आख्यातपदप्रतिपाद्यत्वमित्यर्थः। आख्यातत्वञ्च धात्वर्थावच्छिन्नस्वार्थयत्नविधेयताकान्वयबोधसमर्थशब्दत्वं, तथा चाख्यातसामान्यस्य यत्नापरनामकृतौ शक्तिः, तस्याश्चानुकूलतासम्बन्धेन धात्वर्थस्य विशेषणतया धात्वर्थावच्छिन्नयत्नो बोध्यते, शाब्दबोधे तादृशयत्नस्य विधेयतया भानात्। तादृशयत्नविधेयताकान्वयबोधसमर्थः शब्दः तिङ्-प्रत्ययादिर्बोध्यः। "स चाख्यातः" पूर्वोक्तः आख्यातपदवाच्यस्तिङादिः

कर्त्तृविहिताख्यातस्य कृतावेव शक्तिः, कृतित्व-रूपशक्यताऽवच्छेदकलाघवान्न कर्त्तरि, शक्यता-ऽवच्छेदक-कृतेरननुगमात्। (२०) न चाख्यातेन कर्त्तुरनभिधानेन चैत्रः पचतीत्यत्र चैत्रपदानन्तरं तृतीयापत्तिः लकारेण नाभिहितत्वात् इति

---

"त्रिविध" तिस्रः त्रयो वा विधाः प्रकाराः, भेदा इति यावत्, यस्य स त्रिविधः त्रिविधत्वेन व्यवह्रियमाण इत्यर्थः। तत्रेति निर्द्धारणे सप्तमी। तेषु कर्त्तृविहित-कर्मविहित-भावविहिताख्यातेषु मध्ये कर्त्तृविहिताख्यातस्य "कृतावेव" यत्ने एव शक्तिः, एव कारेण कृतिविशिष्टे शक्तिर्व्यवच्छिद्यते। शक्तिश्च इदं पदमिममर्थं बोधयतु इति, अस्मात् शब्दादयमर्थो बोद्धव्य इत्याकारा ईश्वरेच्छा। पदज्ञानानन्तरं तादृशेच्छारूपशक्तिज्ञानादर्थबोधो भवति; तादृशशक्तिज्ञानञ्च व्याकरणकोषादितो भवति; तथा हि, "शक्तिग्रहं व्याकरणोपमानकोषाप्तवाक्याद्व्यवहारतश्च। वाक्यस्य शेषात् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः॥" इति। तदुदाहरणादि भाषापरिच्छेदादिग्रन्थे अनुसन्धेयम्। कृतित्वावच्छिन्ने शक्तिस्वीकारे युक्तिमाह, कृतित्वरूपेति।—कृतित्वस्य जातिरूपतया अनुगतत्वेन तस्य शक्यताऽवच्छेदकत्वे लाघवम्, अतः "कर्त्तरि" कृतिमति शाब्दिकाभिमते इत्यादिः न, शक्तिः कल्पनीयेति शेषः। तत्र हेतुमाह, शक्यतेति।—शक्यताऽवच्छेदिकायाः "कृतेः" यत्नरूपाया "अननुगमात्" प्रतिव्यक्तिभेदेन नानात्वात्, नानाव्यक्तिषु शक्यताऽवच्छेदकत्वकल्पने गौरवादिति भावः॥ १९॥

शङ्कते, न चाख्यातेनेत्यादि।—"आख्यातेन" कर्त्तृविहिताख्यात-प्रत्ययेन "कर्त्तुः" कृतिमतः, "अनभिधानेन" आख्यातप्रत्ययाशक्यत्वेनेति यावत्, "लकारेण" आख्यातप्रत्ययेन। अयं भावः,—"कर्त्तृकरणयो-स्तृतीया" (२।३।१८) इति पाणिनिसूत्रे अनभिहिते कर्त्तरि करणे च तृतीयाविधानात् आख्यातप्रत्ययस्य कृतौ शक्तया कृतिमान्नाभिधायकत्वे

वाच्यं, कर्त्तृगतसङ्ख्याभिधानानभिधानाभ्यां तृतीयादेर्व्यवस्थापितत्वात्। (२१) एवं व्यापारेऽपि न शक्तिः, कृत्यादिसाधारणयावद्व्यापारानुगतैकधर्माभावात्।

चैत्रः पचतीत्यादौ तिङा कृतिमात्राभिधाने कर्त्तुरनभिधानेन कर्त्तृवाचकचैत्रपदोत्तर तृतीयापत्तिः, निरुक्तानुशासनबलादिति। तच्छङ्कां निरस्यति, कर्त्तृगतेत्यादिना।—तथा हि, यत्राख्यातेन "कर्त्तृगतसङ्ख्याया अभिधानं" कर्त्तृविशेष्यकसङ्ख्याप्रकारकान्वयबोधस्तत्र तादृशान्वयबोधजनक-लकारादिसमभिव्याहृतकर्त्तृवाचकपदोत्तरं प्रथमा भवति, यथा— चैत्रः पचतीत्यादौ लकारस्थानीयतिपा चैत्रविशेष्यकैकत्वसङ्ख्याबोधनात् तादृशलकारसमभिव्याहृतचैत्रपदोत्तरं प्रथमा। तत्रानुशासनं यथा मुग्धबोधमते "त्ये." तिबादि-क्तादिप्रत्ययैरुक्तार्थे कारके प्री प्रथमा भवतीति। एवं यत्राख्यातेन "कर्त्तृगतसङ्ख्याया अनभिधानं" कर्त्तृविशेष्यकसङ्ख्याप्रकारकान्वयबोधस्याजननं तत्र तादृशान्वयबोधाजनकलकारादिसमभिव्याहृतकर्त्तृवाचकपदोत्तरं तृतीया भवति, यथा—चैत्रेण पच्यते तण्डुल इत्यादौ लकारस्थानीय-ते-प्रत्ययेन चैत्रविशेष्यकैकत्वसङ्ख्याया अबोधनात् परन्तु कर्मवाचकतण्डुलगतैकत्वसङ्ख्याबोधनात् तादृशलकारसमभिव्याहृतचैत्रपदोत्तरं तृतीया, तत्रानुशासनं "कर्त्तृकरणयोस्तृतीया" इति पाणिनिः। तादृशसूत्रस्योक्तरूपार्थ एव तात्पर्य्यम्। मुग्धबोधे तु "साधन-हेतु-विशेषण-भेदकं धं कर्त्ता घस्त्री"इति। व्यवस्थापितत्वादिति। —तथा हि,कर्त्तृविहितास्तिङादयः कर्त्तृगतसङ्ख्याया एव बोधनात् तादृशसङ्ख्यासमानसङ्ख्यकवचनाः भवन्ति, कर्मविहितास्तिङादयः कर्मगतसङ्ख्याया बोधनात् तादृशसङ्ख्यासमानसङ्ख्यकवचनाः भवन्तीति सङ्ख्याबोधनाबोधनाभ्यां प्रथमातृतीययोर्नियमनादित्यर्थः ॥ २१ ॥

ननु निरुक्तदोषादाख्यातस्य कर्त्तरि शक्तिर्मा भवतु, परन्तु व्यापारे शक्तिकल्पने का चतिः? इत्यत आह,एवमित्यादि।—"एवं"शक्यतावच्छेदकक्षतेरननुगमात् यथा आख्यातस्य कर्त्तरि न शक्तिः तथेत्यर्थः, व्यापारेऽपि न

अथ कर्त्तृविहिताख्यातस्य कृतौ वर्त्तमानत्वादौ एकत्वादौ च शक्तिः सिद्धा। (२२) तत्र शाब्दबोधे कृतावेव वर्त्तमानत्वादिकम्,एकत्वादिकन्तु कर्त्तर्य्येव प्रतीयते। एकपदोपात्तपदार्थयोर्न विशेषणविशेष्यभावेनान्वयबोध इति व्युत्पत्तेरस्वीकारादननुभवाच्च।

(२३) अथ कर्मविहिताख्यातस्य फले शक्तिर्न

शक्तिः, कल्पनीयेति शेषः। तत्र हेतुमाह, कृत्यादीति।—कृत्यादिसाधारणस्य यावद्व्यापारगतस्य व्यापारत्वस्यानुगतैकधर्मत्वाभावेन तत्राख्यातशक्यताऽवच्छेदकत्वकल्पने महागौरवादिति भावः॥ २१॥

ननु शाब्दबोधे आख्यातार्थानां कृतिकालसङ्ख्यानां कस्य कुत्रान्वयः? इत्याकाङ्क्षायामाह, तत्रेत्यादि।—"तत्र" तेषु मध्ये इत्यर्थः। अन्वयश्चास्य प्रथमान्तपदद्वये बोध्यः। कृतावेवेत्येव-कारेण क्रियाया व्यवच्छेदः, अन्यथा यदा पुरुषः पाकानुकूलयत्नशून्यः किन्तु तदधीनाग्निसंयोगादिरूपः पच्यादर्थो विद्यते, तदा पाकक्रियाया वर्त्तमानत्वेन अयं पचतीति प्रयोगापत्तिः स्यात्। कर्त्तर्य्येवेत्येव-कारेण कृत्यादिव्यवच्छेदः, अन्यथा गुणे गुणानङ्गीकारात् गुणस्वरूपकृतौ गुणरूपसङ्ख्याया अबाधितान्वयबोधासम्भवः स्यात्। एवञ्च कर्त्तृविहितास्तिङादयः कर्त्तृगतसङ्ख्यासमानसङ्ख्यकवचनाः भवन्तीति नियमोऽपि सङ्गच्छते। नन्वाख्यातार्थकृतौ आख्यातार्थवर्त्तमानत्वस्य विशेषणतयाऽन्वये एकपदोपात्तपदार्थयोर्न विशेषणविशेष्यभावेनान्वय इति व्युत्पत्तिविरोधः स्यात्? इत्यत आह, एकेत्यादि।—एकस्मात् पदात्"उपात्तयोः"गृहीतयोः, ज्ञानविषयताऽऽपन्नयोः पदार्थयोरित्यर्थः। उक्तव्युत्पत्तिस्वीकारे अनुभवात्मकप्रमाणमपि नास्तीत्याह—अननुभवाच्चेति।॥ २२॥

अथेत्यादि।—"कर्मविहिताख्यातस्य" कर्मणि वाच्ये विहितस्य शब्दशास्त्रानुशिष्टस्य आख्यातस्य ते-प्रभृत्यात्मनेपदिप्रत्ययस्य,"फले" धात्वर्थता-

कर्मणि। फलन्तु धात्वर्थताऽवच्छेदकम्। अत एव धातोः फलावच्छिन्नव्यापारबोधकत्वेनैव सकर्मकत्वं, तद्बोधकत्वे चाकर्मकत्वमिति बोध्यम्। कर्माख्यातस्य फले वर्त्तमानत्वादावेकत्वादौ च शक्तिः। शाब्दबोधे तु वर्त्तमानत्वं फले, एकत्वादिकञ्च फलाश्रये कर्मण्येव प्रतीयते। तेन तण्डुलः पच्यते इत्यत्र तण्डुलपदोत्तरं न द्वितीया, कर्मगतसङ्ख्याभिधानेन द्वितीयाया बाधितत्वात्।

ऽवच्छेदकीभूते फले इत्यर्थः, धातूनां फलावच्छिन्नव्यापारबोधकत्वादिति भावः। "न कर्मणि" धात्वर्थताऽवच्छेदकीभूतफलाश्रये शक्तिर्न कल्पनीया, गौरवादिति शेषः। फलन्त्विति।—"धात्वर्थताऽवच्छेदक" धात्वर्थांशे अनुकूलतासम्बन्धेन प्रकारीभूतं, तथा हि, गम्यते इत्यादौ गमिधातोः संयोगात्मकफलानुकूलस्पन्दरूपव्यापारवाचितया तादृशधात्वर्थांशव्यापारेऽनुकूलतासम्बन्धेन संयोगात्मकफलस्य प्रकारतया शाब्दबोधे भासते इति संयोगस्य धात्वर्थताऽवच्छेदकत्वं बोध्यम्। एवमन्यत्राप्यनुसन्धेयम्। अत एवेति।—कर्मविहिताख्यातस्य फलशक्तत्वादेवेत्यर्थः। गम्-धातोः पच्-धातोश्चानुकूलतासम्बन्धेन संयोगविशिष्टव्यापारबोधकतया विक्लित्तिविशिष्टव्यापारबोधकतया च सकर्मकत्वं बोध्यम्। "तद्बोधकत्वे च" फलावच्छिन्नव्यापाराबोधकत्वे च यथा घटोऽस्तीत्यादौ अस्-धातोः सत्तामात्रबोधकत्वादेवाकर्मकत्वं बोध्यम्। "कर्माख्यातस्य" कर्मणि वाच्ये विहितस्याख्यातप्रत्ययस्य, "फले" धात्वर्थताऽवच्छेदकीभूते फले, "वर्त्तमानत्वादौ" वर्त्तमानकालवृत्तित्वादौ, तत्तच्छब्दप्रयोगाधिकरणकालवृत्तित्वादाविति यावत्, आदिपदात् वर्त्तमानध्वंसप्रतियोगिकालवृत्तित्वरूपातीतत्वस्य वर्त्तमानप्रागभावप्रतियोगिकालवृत्तित्वरूपभविष्यत्त्वस्य च परिग्रहः। "एकत्वादौ" एकत्व-द्वित्वादिसङ्ख्यायां शक्तिः, बोध्येति शेषः। प्रतीयते इति।—तथा च, कर्मणि सङ्ख्यान्वयादेव तादृशसङ्ख्यासमानसङ्ख्यक-

(२४) अथ भावविहिताख्यातस्य धात्वर्थ एव शक्तिः, अत्र सङ्ख्याऽनन्वितैव तत्र प्रथमान्तपदाभावात्। आख्यातेन यत्र सङ्ख्योक्ता, तत्र प्रथमान्तपदोपस्थाप्यपदार्थान्वितत्वेन क्लृप्तत्वात्। एकवचनन्तु प्रयोगसाधुत्वार्थमेवेति भावः।

---

वचनानि क्रियापदे भवन्तीति भावः। "कर्मगतसङ्ख्याभिधानेन" कर्मविहितप्रत्ययात् कर्मगतसङ्ख्यायाः प्रतिपादनेन, "द्वितीयाया बाधितत्वात्" इति—तथा हि, "कर्मणि द्वितीया" (२।३।२) पाणिनिसूत्रेऽनभिहिते कर्मणि द्वितीयाविधानेन कर्मगतसङ्ख्याऽनभिधाने एव कर्मणि द्वितीया भवतीति तस्य तात्पर्य्यम्; इत्थञ्च कर्मगतसङ्ख्याभिधानमेव द्वितीयाबाधकमित्यपि ततो व्यज्यते॥ २३॥

अथेत्यादि।—"भावविहिताख्यातस्य" भाववाच्ये विहितस्याख्यातप्रत्ययस्य "ते" प्रभृत्यात्मनेपदि-प्रत्ययस्य। धात्वर्थ एवेत्येवकारेण कृतिफलादेर्व्यवच्छेदः, तथा च, यद्धातूत्तरं भावप्रत्ययः तद्धातोरर्थ एव भावप्रत्ययस्य शक्तिः। नन्वेवं तज्जन्यशाब्दबोधे धात्वर्थयोर्द्विधा भानेन उद्देश्यताऽवच्छेदकविधेययोरैक्ये शाब्दबोधस्वीकारात् घटो घट इत्यादिवत् तयोरनन्वयापत्तिः? इति चेन्न; यथा करोतीति शाब्दबोधस्थले आख्यातार्थकृतेर्धात्वर्थस्वरूपतया आख्यातार्थकृतेर्वैयर्थ्यं, तथा भावप्रत्ययस्थलेऽपि भावप्रत्ययार्थरूपधात्वर्थस्य वैयर्थ्यस्वीकारात्; तत्र प्रमाणं मीमांसाशास्त्रं यथा—"सम्भेदेनान्यतरवैयर्थ्यम्"इति। "सम्भेदेन"ऐकरूप्येण, प्रकृतिप्रत्ययार्थयोरभेदेनेति यावत्, "अन्यतरस्य" अन्यतरार्थस्य, वैयर्थ्यमिति तस्यार्थः। न च भाव-भावप्रत्ययार्थस्य वैयर्थ्यध्रौव्ये कथं तत्प्रत्ययप्रयोगः? इति वाच्यम्; "शास्त्रे नापदं प्रयुञ्जीत" इति नियमेन प्रयोगसाधुत्वार्थमेव तस्य प्रयोगात्। ननु भावप्रत्ययप्रयोगस्थले सर्वत्रैकवचनप्रयोगनियमेन तत्राख्यातार्थैकत्वसङ्ख्यायाः क्वान्वयः? इत्याकाङ्क्षायामाह, अत्रेति।—"अत्र" भावविहिताख्यातप्रत्ययान्तप्रयोगस्थले। सङ्ख्याया अनन्वये हेतुमाह, तत्रेति।—"तत्र"

## (२५) आख्यातस्य विशेषार्थकथनम्।

सविषयकपदार्थाभिधायिधातूत्तरकर्त्तृविहिताख्यातस्याश्रयत्वे लक्षणा। यथा करोति, द्वेष्टि, यतते, जानाति, इच्छतीत्यादयः। एवमचेतने

---

तादृशप्रयोगस्यैव, "प्रथमान्तपदाभावात्" प्रथमान्तपदघटितत्वाभावात्, घटितत्वसम्बन्धेन प्रथमान्तपदस्याभावादिति यावत्। तथा हि, आख्यातपदजन्यसङ्ख्यान्वये प्रथमान्तपदोपस्थाप्यत्वस्य तन्त्रत्वादेतदेव प्रतिपादयति, आख्यातेनेत्यादि। ननु यदि भावविहिताख्यातार्थसङ्ख्याऽनन्वितैव तदाऽनपेक्षणात् कथं तत्प्रतिपादकवचनप्रयोगः? इत्यत आह, एकवचनन्त्विति।—"तु" किन्तु, एकवचनं प्रयोगसाधुत्वार्थम्; तथा हि, "शास्त्रे नापदं प्रयुञ्जीत" इति नियमात् अपदस्य प्रयोगनिषेधेन प्रत्ययरहितायाः प्रकृतेः प्रयोगासम्भवेन च पदत्वसिद्ध्यर्थमेव तदुत्तरं भावविहितप्रत्ययोपादानं, तत्र च एकवचनप्रयोगस्तु औत्सर्गिकत्वात् प्रथमोपस्थितत्वाच्च; तत्र च प्रमाणं यथा "सार्वधातुके यक्" (३।१।६३) इति पाणिनिसूत्रव्याख्यावसरे "किन्त्वेकवचनमेव तदौत्सर्गिकत्वेन सङ्ख्याऽनपेक्षणात्" इति। मुग्धबोधे च "भावे मादम्" इति सूत्रम् ॥ २४ ॥

अथ यत्राख्यातस्य शक्यार्थान्वयबोधे बाधस्तत्र लक्ष्यार्थमादायैव अन्वयबोधनिर्वाह इति लक्ष्यार्थरूपमाख्यातस्य विशेषार्थमाह, अथाख्यातस्येति।—"सविषयकपदार्थाः" ज्ञानेच्छाकृतिद्वेषरूपाः,"ज्ञानेच्छाकृतिद्वेषाः सविषयकाः" इति शास्त्रात्, "तदभिधायिनः" तद्वाचकाः, ये "धातवः" ज्ञाप्रभृतिधातवः, "तदुत्तरं" तदुत्तरवर्त्तिनः, "कर्त्तृविहिताख्यातस्य" कर्त्तरि वाच्ये विहिताख्यातप्रत्ययस्येत्यर्थः। यथेत्यादि।—करोतीत्यादौ कृत्यादेः कृतिप्रयोज्यत्वाभावेन आख्यातार्थकृतौ धात्वर्थकृतिद्वेषयत्नज्ञानेच्छादेरनुकूलतासम्बन्धेनान्वयबाधात् आश्रयत्वरूपलक्ष्यार्थमादायान्वयबोधनिर्वाहयत्नस्यापि कृतिपर्य्यायकतया सविषयकत्वं ग्राह्यम्। इदन्तु बोध्यम्,—आख्यातस्य कृतिरूपार्थान्वयस्य बाधेऽपि, सङ्ख्या-कालरूपतदर्थयोः कर्त्तरि सङ्ख्यायां धात्वर्थे च वर्त्तमानत्वादिकालस्यान्वयबोधे न कोऽपि बाधकः। एवञ्च चैत्रः कटं करोतीत्यादौ सविषयकपदार्थाभिधायि-

रथो गच्छतीत्यत्र व्यापाराश्रयत्वे लक्षणा। नश्यतीत्यत्र प्रतियोगित्वे लक्षणा। अत एव नश्यति, नङ्क्ष्यति, नष्ट इत्यादौ वर्त्तमानत्वादिकं प्रतियोगित्वे एवान्वेति।

## (२६) अथ शाब्दबोधः कथ्यते।

धातुकस्थले कर्मप्रत्ययस्य सविषयकत्वार्थकतया कटविषयकवर्तमानकृत्याश्रयः चैत्रः। एवं ज्ञानेच्छादिस्थलेऽप्यूह्यम्। "एवमचेतने" अचेतनकर्तृकस्थले आख्यातस्य कृतिरूपार्थान्वयबाधात् व्यापाराश्रयत्वे लक्षणा। तथा च, रथो गच्छतीत्यादौ उत्तरदेशसंयोगरूपधात्वर्थस्यानुकूलतासम्बन्धेनाख्यातार्थव्यापारे, तत्र च वर्तमानत्वरूपतदर्थस्यान्वयेन गमनानुकूलवर्त्तमानव्यापाराश्रयः रथ इति बोधः। नश्यतीत्यादावाख्यातार्थकृतेरन्वयबाधादाख्यातस्य प्रतियोगित्वे लक्षणा बोध्या, न तु पूर्ववत् आश्रयत्वे लक्षणा; तथात्वे तु प्रतियोगिसमवायिदेशे एव ध्वंस-प्रागभावयोराश्रयत्वस्वीकारात् घटसमवायिकपाले एव नाशाश्रयत्वस्य सत्त्वेन घटे तदभावात् घटो नश्यतीत्यादौ शाब्दबोधानुपपत्तिः स्यादिति भावः। एवञ्च घटो नश्यतीत्यादौ धात्वर्थ-नाशस्योत्पत्तिमदभावरूपतया तन्निरूपितप्रतियोगित्वं घटे वर्त्तते, तथा च, नाशप्रतियोगित्वाश्रयो घट इति शाब्दबोधः। "अत एव" आख्यातस्य प्रतियोगित्वे लक्षणास्वीकारादेव। "वर्त्तमानत्वादिकम्" आख्यातपदप्रतिपाद्यवर्त्तमानकालवृत्तित्वादिकम्; आदिपदेन भूत-भविष्यत्कालवृत्तित्वयोः परिग्रहः। प्रतियोगित्वे एवेत्येव-कारेण धात्वर्थव्यवच्छेदः, तथात्वे तु चिरविनष्टस्थले नाशस्य वर्त्तमानतया नश्यतीति प्रयोगापत्तिः स्यात्, प्रतियोगित्वे तदन्वये च वर्तमानकाले घटस्याभावेन वर्त्तमानकालावच्छेदेन घटे प्रतियोगित्वस्यान्वयासम्भवादिति भावः॥२५॥

अथेति।—अनन्तरमित्यर्थः, कालनिरूपण-लकाराद्यर्थनिरूपणानन्तरमिति यावत्। शाब्दबोध इति।—श्रोत्रग्राह्यो योऽर्थः स शब्दः। असौ पुनर्द्विविधः, ध्वन्यात्मकः वर्णात्मकश्च। तत्राद्यः भेर्य्यादौ प्रसिद्धः, अपरः

यथा, चैत्रस्तण्डुलं पचतीत्यत्र तण्डुलपदेन तण्डुल-पदार्थोपस्थितिः, द्वितीयया कर्मतारूपफलोपस्थितिः, वृत्तित्वं संसर्गः, तेन तण्डुलवृत्तिकर्मत्वमित्यवान्तर-बोधः। पच्-धातुना पाकोपस्थितिः, तत्रानुकूल-तासंसर्गेण तादृशकर्मत्वान्वयः, तेन तण्डुलवृत्ति-कर्मताऽनुकूलपाक इति बोधः। ततः आख्यातेन कृत्युपस्थितिः, तत्रानुकूलतासंसर्गेण तादृशपाका-न्वयः, तेन तण्डुलवृत्तिकर्मत्वानुकूलपाकानुकूल-कृतिरिति बोधः। ततश्चैत्रपदेन चैत्रोपस्थितिः, तत्राश्रयत्वसंसर्गेण तादृशकृतेरन्वयः, तेन तण्डुल-वृत्ति-कर्मताऽनुकूलपाकानुकूलकृत्याश्रयश्चैत्र इति

---

संस्कृतादिभाषास्वरूपः। शब्दस्य संस्कृतभाषारूपशब्दस्य अयमिति शाब्दः, तादृशो यो बोधः ज्ञानम्, अवगमः, अन्वयावगमप्रकारः इत्यर्थः, स "शाब्द-बोध."वाक्यार्थबोध इत्यर्थः; तथा च, वाक्यार्थबोधं प्रति प्रत्येकशब्दार्थ-ज्ञानस्य कारणतया तत्र विभक्त्यर्थरूपशब्दार्थनिरूपणानन्तरं वाक्यार्थानां परस्परान्वयबोधरूपशाब्दबोधप्रकारं प्रदर्शयितुं शिष्यावधानाय प्रति-जानीतेऽथेत्यादिना इति भाव। "तण्डुलपदार्थोपस्थितिः" तण्डुलपदार्थ-स्मृतिः; तथा च, पदज्ञानजन्या या शक्तिलक्षणादिज्ञानाधीनपदार्थस्मृतेः शाब्दबोधं प्रति कारणत्वादिति भावः। "द्वितीयया" तण्डुलपदोत्तरवर्त्ति-द्वितीयाविभक्त्या, "कर्मतारूपस्य फलस्य" विक्लृप्त्यादिरूपफलस्य, "उपस्थिति" स्मृतिः; तथा च, क्रियाजन्यफलशालित्वस्य कर्मतास्वरूप-त्वादिति भ व.। "अवान्तरबोध" इति—तथा च, महावाक्यार्थघटक-प्रत्येकविशिष्टपदार्थरूपावान्तरवाक्यार्थबोधस्य महावाक्यार्थबोधं प्रति हेतुत्वादिति भाव। "पाकोपस्थिति." अधिश्रयणादिरूपव्यापारोप-स्थितिः। "तत्र" तादृशपाके। "तादृशकर्मत्वान्वयः" तण्डुलवृत्तिकर्मत्व-

महावाक्यार्थबोधः। (२७) वाक्यार्थ एव तात्पर्य्यार्थः। वक्ता अशाब्दीयतात्पर्य्यार्थरूपवाक्यार्थमवगत्य पश्चात् शब्दः प्रयुज्यते। सर्वत्र प्रथमान्तपदोपस्थाप्यपदार्थस्यैव शाब्दबोधे मुख्यविशेष्यत्वम्। प्रथमाविभक्तिस्तु साधुतार्था। एवं चैत्रेण पच्यते तण्डुल इत्यादौ चैत्रपदेन चैत्रोपस्थितिः, तृतीयया कृत्युपस्थितिः, वृत्तित्वं संसर्गः, तेन चैत्रवृत्तिकृतिरिति बोधः। ततः पच्-धातुना पाकोपस्थितिः,

स्यान्वयः। "तेन" तादृशान्वयेन। "इति बोधः" इत्यवान्तरबोधः। एवमुत्तरत्रापि बोध्यम्। "ततः" तदनन्तरम्। ततश्चैत्रपदेनेति। —"ततः" तादृशावान्तरबोधानन्तरम् ॥ २६ ॥

वाक्यार्थ इति।—वाक्यं हि नाम कारकान्वितक्रियाप्राधान्यैकविशेष्यकबोधसाधनपदकदम्बकम्; उक्तञ्च वाक्यपदीये—

"साकाङ्क्षावयवं भेदे परानाकाङ्क्षशब्दकम्।
क्रियाप्रधानमेकार्थं सगुणं वाक्यमुच्यते॥"

इति; तथाभूतस्य वाक्यस्यार्थ एव तात्पर्य्यार्थः, न च वक्तुरिष्टं तात्पर्य्यमिति लक्षणम्, अर्थज्ञानानवच्छिन्नपुरुषेणोच्चारितस्य निःश्वसितस्वरूपस्य वेदादेः, शुकादिपठितगाथादोनाञ्च वक्तुरर्थावगत्यसम्भवात्। अत एवोक्तं, तत्प्रतीतिजननयोग्यत्वं तात्पर्य्यमिति; न तदपि सम्यक्, तथात्वे भोजनप्रकरणे सैन्धवमानयेत्युपदिष्टस्य सैन्धवपदात् लवणाश्वोभयार्थप्रतीतियोग्यत्वे युगपदुभयानयनप्रसङ्गः; स चानिष्टः। कथन्तर्हि निष्पत्तिरियम्? तथा हि, तदितरप्रतीतिजननेच्छयाऽनुच्चरितत्वे सति तत्प्रतीतिजननयोग्यत्वं तात्पर्य्यमिति शब्दः प्रयुज्यते इति। तथा च, शब्दप्रयोगं प्रति यथाकथञ्चिदर्थज्ञानस्य कारणत्वादिति भावः। "सर्वत्र" कर्त्तृविहितकर्मविहितप्रत्ययस्थले। "मुख्यविशेष्यत्वं" प्रकारताऽनात्मकविशेष्यत्वम्; तथा च, समानाधिकरण-विषयतयोरैक्यमिति सति मुख्यविशेष्यत्वस्य प्रका-

जन्यता संसर्गः, तेन चैत्रवृत्तिकृतिजन्यः पाक इति बोधः। ततः कर्माख्यातेन फलोपस्थितिः, जन्यत्वं संसर्गः, तेन तादृशपाकजन्यफलमिति बोधः। तण्डुलपदेन तण्डुलपदार्थोपस्थितिः, तत्राश्रयत्वसंसर्गेण तादृशफलान्वयः, तेन चैत्रवृत्ति-कृतिजन्य-पाकजन्यफलशाली तण्डुल इति महावाक्यार्थबोधः। घटमानयेत्यत्र घटपदेन घटोपस्थितिः, द्वितीयया कर्मत्वोपस्थितिः, आङ्-पूर्व-नीञ्-धातुना अभिमतदेशवृत्तिसंयोगानु-कूल-व्यापारजनक-व्यापार-रूपानयनोपस्थितिः। लिङा च इष्टसाधनत्वं कार्य्यत्वं कृतिश्च उपस्थाप्यते, आद्योश्च धात्वर्थे एवान्वयः। एवञ्च घटनिष्ठकर्मत्वानुकूलं यत् इष्टसाधनतावत् कार्य्य-तावच्च आनयनं तदनुकूलकृतिमानित्यन्वयबोधः। करोतीत्यत्र कृ-धातुना कृत्युपस्थितिः, आख्यातेन (२८) लक्षणया चाश्रयत्वोपस्थितिः, तस्याश्रयत्व-

---

रताऽनात्मकत्वं, प्रथमान्तपदोपस्थाप्ये मुख्यविशेष्ये प्रकारताविरहादिति भावः ॥२७॥

लक्षणया चाश्रयत्वोपस्थितिरिति।—तथा च, कर्तृविहिताख्यातस्य कृतौ शक्तया प्रकृते धात्वर्थाख्यातार्थयोरभेदेन शाब्दबोधासम्भवेन तात्पर्य्यानुपपत्तित आख्यातस्य शक्यार्थं परित्यज्य लक्ष्यार्थमादायैव शाब्द-बोधनिर्वाहायोक्तं लक्षणया चेति भावः। 'तस्य" आश्रयत्वरूपाख्याता-

संसर्गेण कृत्याश्रयत्वाश्रय इति शाब्दबोधः। एवं द्वेष्टि, यतते, जानाति, इच्छतीत्यादौ बोध्यम्। एवं रथो गच्छतीत्यत्र गम्-धातुना उत्तरदेशसंयोगानुकूलव्यापारोपस्थितिः, आख्यातेन लक्षणया आश्रयत्वोपस्थितिः, तदुपरि आश्रयत्वं संसर्गः, तेन उत्तरदेशसंयोगानुकूलव्यापाराश्रयत्वाश्रयो रथ इति बोधः। (२९) त्यजतीत्यत्र त्यज् धातुना पूर्वदेशविभागानुकूल-क्रियोपस्थितिः, आख्यातेन शक्त्या कृत्युपस्थितिः, तत्रानुकूलतासंसर्गेण तादृशक्रियान्वयः, तत्र आश्रयत्वं संसर्गः, तेन पूर्वदेशविभागानुकूलक्रियानुकूलकृत्याश्रय इति

---

र्थस्य। आश्रयत्वसंसर्गेण, कर्त्तरि अन्वय इति शेषः। "एवं"करोतीतिवत्। बोध्यमिति।—तथा च, सविषयकधात्वर्थस्थले कर्त्तृविहिताख्यातपदस्य लक्षणया आश्रयत्वरूपार्थस्याश्रयत्वसम्बन्धेन कर्त्तर्य्यन्वयेन द्वेषाश्रयत्वाश्रयः, यत्नाश्रयत्वाश्रयः, ज्ञानाश्रयत्वाश्रयः, इच्छाश्रयत्वाश्रय इत्यादि शाब्दबोधः। अत्रेदं बोध्यं—सविषयकधात्वर्थस्थले विषयत्वं कर्मप्रत्ययार्थः, तस्य च निरूपकतासम्बन्धेन धात्वर्थीभूतद्वेषादौ तादृशविषयत्वस्य वृत्तित्वसम्बन्धेन विषये अन्वयात् विषं द्वेष्टीत्यादौ विषनिष्ठविषयता-निरूपकताक (विषविषयताक)द्वेषाश्रयत्वाश्रय इत्यादि शाब्दबोध इति ॥२८॥

त्यजतीत्यादि।—अत्रेदं बोध्यं—वृक्षं त्यजतीत्यादौ पूर्वदेशो वृक्षः, तद्विभागानुकूला क्रिया व्यापारः त्यज्-धात्वर्थः, तद्घटकीभूतपूर्व-देशविभाग एव फलं, तस्य प्रतियोगित्वसम्बन्धेन वृक्षे सत्त्वात् धात्वर्थताऽव-च्छेदकफलाश्रयत्वेनैव वृक्षादेः कर्मत्वमिति ॥२९॥

बोधः। (३०) एवं पततीत्यत्र पत्-धातुना अधः-संयोगानुकूलक्रियोपस्थितिः, आख्यातेन कृत्युपस्थितिः, आश्रयत्वं संसर्गः, तेन अधःसंयोगानुकूलक्रियानुकूलकृत्याश्रय इति। एवं नश्यतीत्यत्र नश्-धातुना नाशोपस्थितिः, आख्यातेन लक्षणया प्रतियोगित्वोपस्थितिः, आश्रयत्वं संसर्गः, तेन नाशप्रतियोगित्वाश्रयो घट इति बोधः। एवं विद्यते इत्यत्र विद्-धातुना सत्त्वोपस्थितिः, आख्यातेन लक्षणया आश्रयत्वोपस्थितिः, आश्रयत्वं संसर्गः, तेन सत्त्वाश्रयत्वाश्रय इति बोधः। एवं निद्रातीत्यादौ नि-पूर्व-द्रा-धातुना

---

एव पततीत्यादि।—ननु यथा ग्राम गच्छतीत्यादौ गम्-धातुना उत्तरदेशसंयोगानुकूलव्यापारोपस्थित्या तद्घटकीभूतोत्तरदेशसंयोगरूप-फलाश्रयत्वेन ग्रामादेः कर्मता, तथा भूमौ पत्रं पततीत्यादौ पत्-धातुना अध.संयोगानुकूलव्यापारोपस्थित्या तद्घटकीभूताध स ोगरूप-फलाश्रयत्वेन भूम्यादेः कर्मताऽऽपत्त्या पत्रं भूमिं पततीत्यादि प्रयोगापत्तिः? इति चेन्न; ग्रामं गच्छतीत्यादौ गम्-धातुना संयोगानुकूल-परिस्पन्दरूपव्यापारोपस्थितिः तद्घटकसंयोगे ग्राममिति द्वितीयोपस्थिता-धेयत्वस्यान्वयतात्पर्य्येण तादृशप्रयोगात्, इत्थञ्च धात्वर्थताऽवच्छेदकीभूत-संयोगरूप-फलविषयतायामधिकरणानवच्छिन्नत्वविशेषणदानात् तादृश-सयोगस्योत्तरदेशावच्छिन्नत्वेन न गम्-धात्वर्थताऽवच्छेदकत्वं, परन्तु शुद्धसंयोगस्यैव तथात्वात्; एवञ्च भूमौ पततीत्यादौ पत्-धातुना अधःसंयोगानुकूलपरिस्पन्दरूपव्यापारोपस्थित्या तद्घटकसंयोगस्याधो-देशावच्छिन्नतया तादृशसंयोगविषयतायामधिकरणानवच्छिन्नत्वविरहान्

मेध्या-मनःसंयोगोपस्थितिः, आख्यातेन शक्त्या कृत्युपस्थितिः, आश्रयत्वं संसर्गः, तेन मेध्यामनः-संयोगानुकूलकृत्याश्रय इति धीः। (२१) एवं चैत्रो मैत्रं तण्डुलं पाचयतीत्यादौ मैत्रपदोत्तरद्वितीयया वृत्तित्वं, तण्डुलपदोत्तरद्वितीयया फलं, णिजन्त-पच्-धातुना पाकानुकूलव्यापारोऽर्थः, आख्यातेन लक्षणया तदनुकूलव्यापारो बोध्यः, तदुपरि आश्रयत्वं संसर्गः, तेन तण्डुलवृत्ति-कर्मत्वानुकूलपाकानुकूल-मैत्रवृत्तिव्यापारानुकूल-व्यापारवांश्चैत्र इति बोधः। एवं यदा चैत्रो मैत्रेण

---

भूमिं पततीति प्रयोगापत्तिरित्यादि-समाधानस्य व्युत्पत्तिवादे भट्टाचार्य्यपादैर्विवृतत्वात्। मेध्या-मन.संयोगेति।—"मेध्या" नाड़ीविशेषः, तत्र मनसो यः संयोगः स एव निद्रापदार्थः ॥२०॥

अथ णिजन्त(ण्यन्त)धातुकस्थलीयशाब्दबोधप्रकारमाह, एवमित्यादि।—वृत्तित्वमिति, अन्वयश्चास्य णिजन्तधातूपस्थाप्ये पाकानुकूलव्यापारे। "फलम्" इति, रूपपरावृत्तिस्वरूपविक्लृप्तिरित्यर्थ.। अन्वयश्चास्य अनुकूलतासम्बन्धेन तेजःसंयोगविशेषरूपपाकपदार्थे। पाकानुकूलव्यापार इति।—अत्र पच्-धातोस्तेजःसंयोगविशेषरूपोऽर्थ', णिच्-प्रत्ययस्यानुकूलव्यापारोऽर्थोऽभिप्रेतः। "तेन" तत्तच्छब्दस्य तादृशार्थस्वीकारेण, तण्डुलवृत्ति यत् "कर्मत्व" विक्लृप्तिरूपं, तदनुकूलो य. "पाकः" तेजः-संयोगविशेषः, तदनुकूलो मैत्रवृत्तिर्यो "व्यापारः" तदीया चेष्टा कृतिर्वा, तदनुकूलो यो "व्यापार." त्वं पच इत्यादि शब्दप्रयोगरूपस्तद्वान् चैत्र इति शाब्दबोध इत्यर्थः। वस्तुतस्तु रूपपरावृत्तिजनकतेज.संयोग एव पच्-धातोरर्थः, णिच्-प्रत्ययस्य हेतुकर्तृत्वमर्थः, "हेतुमति च" (३।१।२६) इति पाणिनिसूत्रात्। हेतुकर्तृत्वञ्च स्वतन्त्रकर्तृप्रेरणा अन्यनिष्ठ-

तण्डुलं पाचयतीति प्रयोगः, तत्रापि पूर्ववदन्वय-बोधः। मैत्रस्य व्यापारापेक्षया कर्त्तृत्वं चैत्र-व्यापारापेक्षया कर्मत्वञ्च, अतो द्वितीयातृतीययो-र्वैकल्पिकत्वमिति बोध्यम्। एवं चैत्रेण मैत्र-स्तण्डुलं पाच्यते इत्यत्र चैत्रवृत्तिर्यो व्यापारः तज्जन्यो यस्तण्डुलवृत्तिकर्मतानुकूल-पाकानुकूल-व्यापारस्तदाश्रयो मैत्र इति बोधः,वृत्तित्वं संसर्गः, तृतीयया व्यापारो बोध्यते, पाचि-धातुना पाकानुकूलव्यापारो बोध्यते, कर्माख्यातेनाश्रयत्वं, द्वितीयया कर्मत्वञ्च बोध्यते। एवं पिपठिषति इत्यत्र पठ्-धातुना पाठोपस्थितिः, सन्-प्रत्ययेन इच्छोपस्थितिः, विषयता संसर्गः, आख्यातेन

---

कर्त्तृत्वनिर्वाहकव्यापाररूपा। अत्र च मैत्रनिष्ठा या पाकादिकृति-स्तन्निर्वाहकव्यापारः। एवञ्च णिजन्तधातुप्रतिपाद्यताऽवच्छेदकं कर्त्तृत्वमेव फलं, तादृशफलाश्रयतयाऽस्वतन्त्रस्य कर्त्तुः प्रयोज्यकर्त्तुः मैत्रादेः कर्मतया तदुत्तरद्वितीयाया वृत्तित्वमर्थः ; अन्वयश्चास्य णिजर्थे अनुकूलकृतिरूपव्यापारे। तण्डुलपदोत्तरद्वितीयाया वृत्तित्वमर्थः ; अन्वय-श्चास्य पच्-धात्वर्थ-रूपपरावृत्तिरूपविक्लृप्तिरूपफले ; एवञ्च तण्डुलवृत्ति-विक्लृत्यनुकूलतेजःसंयोगानुकूलो मैत्रवृत्तिर्यो व्यापारस्तदनुकूलव्यापारवांश्चैत्र इति बोधः ; एतेन तण्डुलपदोत्तरद्वितीयायाः फलरूपार्थस्यादृष्ट-चरत्वेऽपि न क्षतिः। वैकल्पिकत्वमिति।—अयमभिप्रायः,—यदा तादृशफलविशेषणतया अस्वतन्त्रकर्त्तृमैत्रादिवृत्तित्वविवक्षा, तदा चैत्रो मैत्रं तण्डुलं पाचयतीति प्रयोगः, यदा तु पाकादिविशेषणतया अस्वतन्त्रकर्त्तृमैत्रादिकर्त्तृत्वविवक्षा, तदा चैत्रो मैत्रेण तण्डुलं पाचयतीति

लक्षणया आश्रयत्वोपस्थितिः, तदुपरि पुनराश्रयत्वं संसर्गः, तेन पाठविषयकेच्छाश्रयत्वाश्रय इति धीः। एवं देवदत्तेन शास्त्रं पिपठिष्यते इत्यत्र देवदत्त-वृत्तीच्छाविषय-पाठजन्य-फलशालिशास्त्रमिति बोधः।

अथ कर्तृविहितकृत्प्रत्ययस्य कृत्याश्रये शक्तिः, तेन अन्नस्य पक्तेत्यत्र षष्ठ्याः कर्मत्वं द्वितीयाप्रतिरूपत्वात्, पच्-धातुना पाकः, तृचा कृत्याश्रयो बोध्यते, अभेदः संसर्गः, तेन अन्नकर्मकपाकानुकूलकृत्याश्रयाभिन्नस्त्वेन इति शाब्दधीः। एवं अन्नस्य पाचक इत्यत्रापि वुन् प्रत्ययेन कृत्याश्रयो बोध्यते। अथ भावकर्मविहितकृत्प्रत्ययस्य भावकर्मणी शक्ये, तेन चैत्रेण पक्वमन्नमित्यत्र चैत्रपदोत्तर-तृतीयया कृत्युपस्थितिः, वृत्तित्वं संसर्गः, पच्-धातुना पाकोपस्थितिः, जन्यत्वं संसर्गः, निष्ठया फलशालित्वोपस्थितिः, अभेदः संसर्गः, तेन चैत्रवृत्तिकृतिजन्यपाकजन्यफलशाल्यभिन्नमन्नमित्यर्थः। भावस्थले तु चैत्रेण पक्वमित्यत्र चैत्रवृत्तिकृतिजन्यः पाक इति धीः।

---

प्रयोगः, तत्र च तण्डुलवृत्तिर्विक्लित्तिर्नत्वकर्तृको यो विक्लृप्त्यनुकूलो व्यापारस्तदनुकूलव्यापारवान् चैत्र इति बोधः ॥ २१ ॥

(३२) भावकृद्घञादीनां प्रयोगे साधुतामात्रं, द्विवचनादिकन्तु "कृद्विहितो भावो द्रव्यवत् प्रकाशते" इति न्यायादिति। एधानाहर्त्तुं व्रजतीत्यत्र एध-पदेन काष्ठोपस्थितिः, द्वितीयया कर्मतोपस्थितिः, आङ्पूर्व-हृ-धातुना आहरणोपस्थितिः, तुम्-प्रत्ययेन उद्देश्यतोपस्थितिः, आख्यातेन कृत्युपस्थितिः, आश्रयत्वं संसर्गः, तेन एधवृत्तिकर्मताऽनुकूलाहरणोद्देश्यक-व्रजनानुकूलकृत्याश्रय इति शाब्दधीः।

(३३) अथ द्विकर्मकविचारः।

---

भावकृद्घञादीनामिति।—तथा हि, "भावः" धात्वर्थः। घञादिप्रत्ययानां धात्वर्थरूपभावस्वरूपत्वे धात्वर्थ-प्रत्ययार्थयोरभेदेन शाब्दबोधानुपपत्तिरिति प्रयोगसाधुत्वार्थमेव घञादीनां प्रयोगः, अन्यथा "शास्त्रे नापदं प्रयुञ्जीत" इति नियमात् केवलधातुमात्रप्रयोगो न सम्भाव्येत इति प्राक् विवृतमेव। ननु भावविहितघञाद्यन्तप्रयोगस्य साधुत्वार्थं प्रयोगोपस्थितत्वात् तदुत्तरं सुबादिविभक्तेरेकवचनमेव भवतु, तथात्वे तु पाकौ पाकाः इत्यादिप्रयोगः कथमुपपद्यते? इत्यत आह, द्विवचनादिकन्त्विति।—तथा च, भाववाच्ये कृद्विहितप्रत्ययस्य द्रव्यतुल्यतया द्रव्यसमानधर्मवत्त्वेन लिङ्गसङ्ख्यावत्त्वं ग्राह्यं, परन्तु "घञलौ पुंसि विज्ञेयौ" इति नियमेन घञन्तस्य पुंलिङ्गत्वमेव ; इत्थञ्च साधुः पाकः साधू पाकौ साधवः पाकाः इत्यादिप्रयोगाः पाकद्वयादिस्थले भवन्ति ॥ ३२ ॥

अथेति।—सकर्मकाः खलु द्विविधाः, एककर्मकाः, द्विकर्मकाश्च। एककर्मान्वितस्वार्थबोधकाः गम्यादयः एककर्मकाः। द्विकर्मकाः खलु द्विकर्मान्वितद्विव्यापारार्थकाः। तथा हि, फलावच्छिन्नक्रियानुकूल-

अजां ग्रामं नयतीत्यत्र अजावृत्तिकर्मताऽनुकूला या ग्रामविषयिणी प्राप्तिः तदनुकूलकृत्याश्रय इति बोधः। एवं नीयते ग्राममजा पथिकेन इत्यत्र पथिकनिष्ठकृतिजन्या या ग्रामविषयिणी

---

व्यापारवाचित्वादेव याच्ञार्थ-दुह-चिप्रभृतीनां नी-वहादीनाञ्च द्विकर्मकाणां धातूनां द्विकर्मकता; यथा, दुह-धातोः विभागावच्छिन्नक्षरणानुकूलव्यापारार्थकतया क्षरणरूपक्रियायाः तदनुकूलव्यापारस्य च बोधनात्, नी-धातोः उत्तरदेशसंयोगावच्छिन्नक्रियानुकूलव्यापारार्थकतया स्पन्दरूपक्रियायाः तदनुकूलव्यापारस्य च बोधनात् द्विकर्मकता, एवमन्यत्रापि बोध्यम्। धात्वर्थव्यापारजन्यफलशालितया कर्मणो मुख्यत्वं, तादृशफलजन्यफलशालितया कर्मणो गौणत्वं बोध्यम्। द्विकर्मान्वितद्विव्यापारार्थकाः पुनर्णिजन्ताः एककर्मकधातवः। तत्र च मूलधातुनैकव्यापारोऽभिधीयते, द्वितीयस्तु णिजन्तधातुना। तद्व्यापारद्वये च ईप्सितकर्मणः प्रयुज्यकर्तृरूपकर्मणश्च यथाक्रममन्वयः, तथात्वञ्च गम्यादीनामिति बोध्यम्। वस्तुतस्तु अजां ग्रामं नयतीत्यत्र उत्तरदेशसंयोगावच्छिन्नक्रियानुकूलव्यापाररूपा प्राप्तिर्नी-धातोरर्थः, द्वितीयाद्वयस्य वृत्तित्वमर्थः, उत्तरदेशसंयोगरूपधात्वर्थैकदेशे गौणकर्मग्रामपदोत्तरद्वितीयार्थवृत्तित्वस्य, स्पन्दात्मकक्रियारूपफले प्रधानकर्माजादिपदोत्तरद्वितीयार्थवृत्तित्वस्यान्वयः; एवञ्च ग्रामवृत्तिसंयोगानुकूला या अजावृत्तिक्रिया तदनुकूलव्यापारः (स एव प्राप्तिपदार्थः) तदनुकूलकृतिमान् इत्येव शाब्दबोधः। एवं नीयते ग्राममजा पथिकेनेत्यत्र उत्तरदेशसंयोगावच्छिन्नक्रियारूपं फलं कर्माख्यातार्थः, तत्र चोक्तक्रियानुकूलव्यापारस्य प्राप्तिरूपस्य धात्वर्थस्य जन्यतासम्बन्धेन, कर्माख्यातार्थतादृशक्रियारूपफलस्याश्रयतासम्बन्धेन अजारूपप्रधानकर्मण्यन्वयः। गौणकर्म-ग्रामवृत्तित्वस्य च तादृशधात्वर्थताऽवच्छेदकताऽवच्छेदकीभूतोत्तरदेशसंयोगेऽन्वयः; एवञ्च पथिकनिष्ठकृतिजन्या या ग्रामवृत्त्युत्तरदेशसंयोगानुकूलक्रियानुकूल

प्राप्तिस्तज्जन्यफलशालिन्यजा इति शाब्दधीः।
(२४) एवं गां दोग्धि पयो गोपालक इत्यत्र
गो-सम्बन्धि-पयोवृत्तिकर्मताऽनुकूल दोहनानुकूल-
कृतिमानित्यन्वयधीः। एवं दुह्यते गौः क्षीरं
गोपालकेन इत्यत्र गोपालकनिष्ठ-कृतिजन्य-
क्षीरविषयक-दोहननिमित्तं गौरित्यन्वयः।

---

व्यापाररूपा प्राप्तिः तज्जन्योत्तरदेशसंयोगानुकूलक्रियारूपफलशालिनी अजेति बोधः। इत्यञ्च ग्रन्थकारोक्तशाब्दबोधद्वयन्तु आपाततः पथप्रदर्शनार्थमेव, परन्तु निरुक्तशाब्दबोधद्वयतात्पर्य्यकं बोध्यम् ॥ २३ ॥

एवं गामित्यादि।—तथा हि, विभागावच्छिन्नक्षरणानुकूलो व्यापारः दुह-धात्वर्थः, गवादेः सम्बन्धविवक्षायां शेषे षष्ठीप्रसक्तया रजकस्य वस्त्रं ददातीतिवत्, तदपवादार्थम् "अकथितञ्च" (१।४।५१पा०) इत्यनुशासनम्; तथा च, गवादिपदोत्तरद्वितीयायाः सम्बन्धोऽर्थः, स च धात्वर्थैकदेशे विभागे; पयःपदोत्तरद्वितीयाया वृत्तित्वमर्थः, तच्च तादृशक्षरणे; एवञ्च गोसम्बन्धिविभागानुकूल-पयोवृत्तिक्षरणानुकूलव्यापारस्यैव गोसम्बन्धि-पयोवृत्तिकर्मताऽनुकूलदोहनपर्य्यन्तार्थतया कृतेराख्यातार्थतया तदनुकूलकृतिमानिति प्रथमोक्तान्वयधियस्तात्पर्य्यम्। वस्तुतस्तु विभागावच्छिन्नक्षरणेत्यस्य गोक्षीरयोर्यो विभागस्तज्जनकं यत् क्षरणमित्यर्थः; एवञ्च गोपदोत्तरद्वितीयाया वृत्तित्वमर्थः, अन्वयश्चास्य विभागे। अन्यत् सर्वं पूर्ववत्। अत एव फलविशेषणीभूत-गुणफलविभागादिमतः कर्मत्वज्ञापनार्थम् "अकथितम्" इति सूत्रमिति। दुह्यते गौः क्षीरं गोपालकेनेत्यत्र क्षरणजन्यविभागाश्रयत्वरूपं गवादिनिष्ठं यत् अप्रधानकर्मत्वं तदेव कर्माख्यातस्यार्थः; "अप्रधाने दुहादीनाम्" इत्यनुशासनात्। क्षीरपदोत्तरद्वितीयाया वृत्तित्वमर्थः, अन्वयश्चास्य धात्वर्थक्षरणे, उक्तकर्माख्यातार्थघटकक्षरणे च जन्यतासम्बन्धेन धात्वर्थव्यापारस्यान्वयः; एवञ्च गोपालकनिष्ठकृतिजन्यो यो विभागानुकूल-

एवञ्च प्रकृते कर्माख्यातेनाप्रधानकर्मणो गवादेर्बोधजननादिति "अकथितं कर्म" ( १।४।५१। पा० ) इत्युक्तम्। कर्मत्वातिदेशस्तु द्वितीयालाभार्थो न तु साक्षात्कर्मत्वम्। एवं चैत्रस्य पाकः, अद्भुतः समुद्रस्य बन्धो वानरैरित्यादौ चैत्रनिष्ठकृतिजन्यः पाकः, एवं वानरीयकृतिजन्य-समुद्रविषयकबन्धनमद्भुतमिति

---

क्षीरनिष्ठक्षरणानुकूलो व्यापारः तज्जन्यक्षरणजन्यविभागाश्रयो गौरित्येव तादृशान्वयबोधस्य तात्पर्य्यम्। "प्रकृते" प्रकृतस्थले, "कर्माख्यातेन" कर्मविहिताख्यातप्रत्ययेन क्षरणजन्यविभागाश्रयत्वार्थकेन, "अप्रधानकर्मणो गवादेः" इति—तथा च, क्षरणजन्यविभागाश्रयत्वरूपाप्रधानकर्मत्वेन गवादेर्बोधजननादित्यर्थः, "इति अकथितं कर्म इत्युक्तम्" इति—तथा हि "कर्त्तुरीप्सिततमं कर्म" (१।४।४९) इति पाणिनिसूत्रस्य कर्त्ता आप्तुमिष्यमाणतमं कर्मेत्यर्थकरणात् ईप्सितानां मध्ये प्रकृष्टेप्सितस्यैव कर्मसंज्ञाविधानेन मुख्यकर्मण एव कर्मसंज्ञा तादृशसूत्रात् बोध्यते, न तु अप्रधानकर्मणः ; एवञ्चाप्रधानकर्मणः कर्मसंज्ञाविधानार्थमेव "अकथितम्" इति सूत्रम्। तदर्थस्तु—अपादानादिविशेषैरविवक्षितं कारकं कर्मसंज्ञं स्यादिति। यस्यापादानादिविशेषविवक्षा नास्ति तादृशकारकस्यैव कर्मसंज्ञाविधानकमेतत् सूत्रम्, अपादानादिविवक्षायान्तु गोर्दोग्धि पय इत्येव भवति ; एवञ्च अप्रधानकर्मणः कर्त्तुरीप्सिततमत्वाभावेन धात्वर्थव्यापारजन्यफलरूपमुख्यफलाश्रयत्वाभावेन च "कर्त्तुरीप्सिततमं कर्म" इति सूत्राविषयतया तस्य कर्मसंज्ञाविधानार्थमेवैतत् सूत्रमिति तात्पर्य्यम्। कर्मत्वातिदेशस्त्विति।—तथा च, तादृशसूत्रादप्रधानकर्मणः अपादानाद्यविवक्षायां कर्मत्वातिदेशस्तु तदुत्तरं द्वितीयाविभक्तिलाभार्थमेव "न तु साक्षात् कर्मत्वं" धात्वर्थव्यापारजन्यफलाश्रयत्वेन मुख्यकर्मत्वमित्यर्थः।

बोधः। क्वचित् षष्ठ्यास्तृतीयाप्रतिनिधित्वात् कृतिरर्थः, क्वचित् द्वितीयाप्रतिनिधित्वात् कर्मत्वमर्थः। एवम् अधीती व्याकरणे, पठिती तन्त्रे इत्यादौ व्याकरणमधीतवान्, तन्त्रं पठितवान् इत्याद्यन्वयधीः। "क्तस्येन्-विषयस्य कर्मणि" इत्यनेन सप्तम्या द्वितीया प्रतिनिधित्वात्। एवं—

(३५)"चर्मणि द्वीपिनं हन्ति, दन्तयोर्हन्ति कुञ्जरम्।
केशेषु चमरीं हन्ति, सीम्नि पुष्पलको हतः॥"

इत्यादौ "निमित्तात् कर्मयोगे" इति निमित्तसप्तमी, "निमित्तात्" उद्देश्यात्, तद्वाचकपदा-

क्वचित् षष्ठ्या इत्यादि।—तथा च, चैत्रस्य पाक इत्यादौ कृत्प्रत्यययोगे कर्त्तरि षष्ठीविधानात् तृतीयार्थकृतिः तादृशषष्ठीविभक्त्या बोध्यतया तादृशषष्ठ्याः तृतीयाविभक्तिकार्य्यकारित्वेन तृतीयाप्रतिनिधित्वम्। एवं समुद्रस्य बन्ध इत्यादौ कृत्प्रत्यययोगे कर्मणि षष्ठ्याः कर्मत्वार्थकतया द्वितीयाप्रतिनिधित्वं बोध्यम्। क्तस्येन्-विषयस्येत्यादि।—तथा च, "क्तस्येन्-विषयस्य कर्मण्युपसङ्ख्यानम्" इति पाणिनिधृतवार्त्तिकसूत्रस्यायमर्थः,—"इन्-विषयस्य" इन्-प्रत्ययप्रकृतिभूतस्य "क्तस्य" क्तान्तस्य कर्मणि सप्तमी भवतीत्यर्थः। भावे क्त-प्रत्यये ततः "इष्टादिभ्यश्च" (५।२।८८ पा०) इति तद्धितसूत्रात् कर्त्तरि अर्थे इनि कृते गुणीभूतक्तान्तक्रियया सम्बध्यमाने कर्मणि व्याकरणे तन्त्रे च सप्तमीविधानेन सप्तम्या द्वितीयार्थकतया द्वितीयाप्रतिनिधित्वं बोध्यम्॥३४॥

चर्मणीति।—"निमित्तात् कर्मयोगे" इति वार्त्तिकसूत्रम्; तेन हि "चर्मणि" चर्मनिमित्तमित्यर्थावगमः। निमित्तमिह क्रियाफलं, यदि तु कारणमित्युच्यते तर्हि जाड्येन बद्धः इत्यादौ अतिप्रसङ्गः स्यात्। योगश्चेह संयोगसमवायसम्बन्धान्यतररूपः, तत्र द्वीपिचर्मणोः गन्धमृगसीम्नोः

दित्यर्थः। तथा च, निमित्तकर्मणोरवयवावयवित्व-सम्बन्धश्चेत्तदा निमित्तवाचकपदात् सप्तमी, तेन चर्मोद्देश्यकं यद्द्वीपिकर्मकहननं तदनुकूलकृति-मानित्यन्वयः। एवमन्यत्रापि बोध्यम्। "पुष्कलकः" गन्धमृगः। "सीम्नि" अण्डकोषे। (२६) सति सप्तम्याः सामानाधिकरण्यमर्थः। क्वचित् कालिकं, क्वचित् दैशिकञ्च। यथा—गोषु दुह्यमानास्वागतः, दुग्धास्वागतः इत्यादौ समानकालीनत्वं भासते; तेन गोविषयकवर्त्तमानदोहनसमानकालीनवर्त्त-मानगमनानुकूलकृतिमान्, एवं गोविषयकातीत-दोहनसमानकालीनातीत-गमनाऽनुकूलकृतिमान्

---

अवयवावयविभावात् समवायः। हरदत्तस्तु—"पुष्कलकः" शङ्कुः, "सीम्नि" सीमज्ञानार्थं, "हतः" निखात इत्याह। अस्मिंस्तु पक्षे—सीमपुष्कलकयोः संयोगः। "मुक्ताफलाय करिणं हरिणं पलाय" इत्यादौ "क्रियार्थोप-पदस्य"(२।३।१४) इत्यादि पाणिनिसूत्रेण चतुर्थी, मुक्ताफलमाहर्त्तुमित्यर्थ-विवक्षया,न तु मुक्ताफलं प्राप्तुमित्यर्थविवक्षया ; तथा हि, वाक्यपदीये—

"च्यन्तःकर्म्मण्युपष्टम्भात् प्राप्तुमर्थे च सप्तमीम्।
चतुर्थीबाधिकामाहुर्ग्रुरुखिंभागुरिवाग्भटाः॥"

इति भर्त्तृहरिणोक्तम्। अपप्रयोग एवायमिति बहवः। विधिरयं हेत्वर्थे तृतीयायाः तादर्थ्यचतुर्थ्याश्च प्रतिषेधक इत्यवगन्तव्यम् ॥२५॥

सतीति।—"यस्य च भावेन भावलक्षणम्" (२।३।३७) इति पाणिनि-सूत्रेण विहिता सप्तमी सति सप्तमी। इह खलु समानदेश-कालाभ्यां परिच्छेदकत्वरूपलक्षणमर्थः, तेन गोषु दुह्यमानासु आगत इत्यादौ गो-दोहनक्रियाकालेनागमनकालपरिच्छेदात् गवादेः सप्तमी। गुणे सति

इत्यन्वयः। दैशिकं यथा—द्रव्यं गुणकर्मान्यत्वे सति सत्त्वादित्यादौ सत्तानिष्ठं गुणकर्मणोर्भेद-समानदेशत्वं भासते, तेन गुणकर्मप्रतियोगिको यो भेदः तस्य समानदेशा सत्तेति बोधः। द्रव्ये भेदसत्त्वयोर्दैशिकसामानाधिकरण्यादिति। पितृव्यघाती पुत्रो जनिता, एवं "गतो वनं श्वो भवितेति रामः" इत्यादौ पितृव्यं हतवानित्यर्थे पितृव्यघाती, जनिष्यतीत्यर्थे जनितेति कथं भविष्यदुत्पत्तिकपुत्रे पितृव्यकर्मकातीतहनन-कर्तृत्वसम्बन्धः? असम्भवात्; एवमन्यत्राप्य-सम्भव इति (३७) "धातुसम्बन्धे प्रत्ययाः" (३।४।१ पा०) सूत्रकरणम्। तस्यायमर्थः,—धात्वर्थस्यावश्यकसम्बन्धे तद्धात्वर्थसमभिव्याहृत-क्रियान्तरभिन्नकालीनप्रत्ययाः साधवः स्युः। बोधे तु यथोचितकालमादायैव विषयीभवति, तेन भविष्यदुत्पत्तिकपुत्रे यदवश्यं पितृव्यकर्मक-

द्रव्यत्वमस्तीत्यादौ तु गुणसत्ताया द्रव्यत्वसत्ताधिकरणदेशपरिच्छेदकत्वात् गुणवाचकात् सप्तमीति बोध्यम्। प्रसिद्धस्य निर्ज्ञातदेशकालक्रियायाः अनिर्ज्ञातदेशकालयोः परिच्छेदकत्वं, तस्याश्च कदाचित् स्वसमानकालेन कदाचिच्च सपूर्वोत्तरकालाभ्याश्च तथात्वम्; तेन दुग्धासु धोक्ष्यमाणासु गोष्वित्यादौ सिद्धिः॥ ३६॥

तादृशशङ्कां निरस्यति, धातुसम्बन्धे इत्यादिना।—धात्वर्थयोः विशेष्य-

हनन भासते, तदैवायं प्रयोगः साधुः। तेना-तीतकालविहितप्रत्ययेनावश्यकत्वं भासते; तेन भविष्यदुत्पत्तिकपुत्रोऽवश्यं पितृव्यं हनिष्यतीति बोधः। एवं परदिनोत्पत्तिप्रतियोगी रामोऽवश्यं वनं गमिष्यतीति बोधः।

## (३८) अथ कारक-विचारः।

तत्र क्रियानिमित्तत्वं कारकत्वमिति वैया-

---

विशेषणाभावरूपसम्बन्धे यत्र काले ये प्रत्यया उक्तास्ततोऽन्यत्र कालेऽपि ते स्युः, तिङ्वाच्यक्रियायाः प्राधान्यात् तदनुरोधेन गुणभूतक्रियावाचिनः प्रत्ययाः कालान्तरभाजो भवन्तीति तत्सूत्रतात्पर्य्यम् ॥ ३७ ॥

अथेति।-"कारकत्वं"नाम क्रियाजनकशक्तिमत्त्वं, भाष्ये "करोति क्रियां निर्वर्त्तयति" इति व्युत्पत्तिदर्शनात्, "साधकं क्रियानिष्पादकं कारकसंज्ञम्" इति वार्त्तिकोक्तेश्च। क्रियायाञ्च शक्तेरेवान्वयव्यतिरेक-सत्त्वात् कारकत्वम् इति मतान्तरम्; तदुक्तं हरिणा—

"स्वाश्रये समवेतानां तद्वदेवाश्रयान्तरे।
क्रियाणामभिनिष्पत्तौ सामर्थ्यं साधनं विदुः"॥ इति।

शक्ति-शक्तिमतोरभेदाच्च द्रव्यं कारकमिति व्यवहारः इति बोध्यम्। एवञ्च क्रियाजनकत्वेन सर्वेषां कर्त्तृत्वेऽपि स्वस्वावान्तरव्यापारविवक्षयैव करणत्वादिकमवगन्तव्यम्। अत्रोक्तं हरिणा—

"निष्पत्तिमात्रे कर्त्तृत्वं सर्वत्रैवास्ति कारके।
व्यापारभेदापेक्षायां करणत्वादिसम्भवः॥" इति।

अत्रावान्तरभेदपरिग्रहो यथा—कर्त्तुः कारकान्तरप्रवर्त्तनव्यापारः। करणस्य क्रियाजनकाव्यवहितव्यापारः। कर्मणः क्रियाफलेनोद्देश्यत्व-व्यापारः। अधिकरणस्य कर्त्तृकर्मव्यवहितक्रियाधारणव्यापारः।

करणाः। तन्न; (३९) मैत्रस्य तण्डुलं पचतीत्यादौ सम्बन्धिनि मैत्रे कारकत्वापत्तिः, सम्प्रदानादेरनुमतिप्रकाशनद्वारेव तण्डुलसम्पादनद्वाराऽपि पाकनिमित्तत्वात्। विभक्त्यर्थद्वारा क्रियाऽन्वयित्वं कारकत्वमिति नैयायिकाः। अत एव नामार्थ-धात्वर्थयोर्भेदेन साक्षादन्वयस्याव्युत्पन्नत्वात्। तद्द्वारीभूत-विभक्त्यर्थोपस्थितेस्तन्त्वं कल्प्यम्। विभक्तिस्तु क्वचित् सुबात्मिका क्वचित् तिङात्मिका च इति शेषः। स्तोकं पचतीत्यादौ क्रियाविशेषणे अतिप्रसङ्गवारणाय विभक्त्यर्थद्वारेति। तत्र हि द्वितीया साधुत्वार्था। सम्बन्धिनः क्रियानिमित्तत्वेऽपि न क्रियाऽन्वयित्वम्, अतो नातिव्याप्तिः। "गुरु-विप्र-तपस्वि-दुर्गतानां प्रतिकुर्वीत भिषक् स्वभेषजैः" इत्यादौ तु (४०) नामाध्याहारः कर्त्तव्योऽतो नातिव्याप्तिः।

---

सम्प्रदानस्य प्रेरणानुमत्यादिव्यापारः। अपादानस्य अवधिभावोऽपगमव्यापारः इति ॥ ३८ ॥

मैत्रस्येति।—"क्रियाऽन्वयित्वं कारकत्वम्" इत्याद्युक्तलक्षणात् तण्डुलसम्बन्धिमैत्रपदस्य पचतीति क्रियया साक्षादन्वयाभावात् न कारकत्वमिति स्पष्टम् ॥३९॥

नामाध्याहार इति।—रोगमित्यादि-नामाध्याहारः; तेन रोगादिपदा-

## अथ कर्त्तृलक्षणम्।

क्रियाऽनुकूलकृतिमत्त्वं (४१) कर्त्तृत्वं, कर्त्तृपदस्य यत्नार्थकृञ्जन्य-कृ-धातुव्युत्पन्नत्वात्। अतोऽन्यत्र अचेतनादौ कर्त्तृत्वं भाक्तमिति।

## अथ क्रियालक्षणम्।

धातोरर्थः (४२) क्रिया, सा च द्विधा, क्वचित्

---

र्थेन सम षष्ठ्यन्तस्यान्वयः, न तु प्रतिकुर्वीतेति क्रियया। वस्तुतः "कृञः प्रतियत्ने" (२।३।५३) इति पाणिनिसूत्रेण कृञः कर्मणि षष्ठी भवति ॥४०॥

कर्त्तृत्वमिति।—"कर्त्तृत्वं" नाम धातूपात्तव्यापाराश्रयत्वम्;—

"धातुनोक्तक्रिये नित्यं कारके कर्त्तृतेष्यते।"

इति ह्युक्तेः। स च द्विविधः, स्वतन्त्रः तत्प्रयोजकश्चेति भेदात्। तत्र "स्वातन्त्र्य" नाम इतरव्यापारानधीनव्यापारवत्त्वं कारकान्तर-प्रयोजकव्यापारवत्त्वं वा। अत्रोक्तं हरिणा—

"प्रागन्यतः शक्तिलाभात् न्यग्भावापादनादपि।
तदधीनप्रवृत्तित्वात् प्रवृत्तानां निवर्त्तनात्॥
अदृष्टत्वात् प्रतिनिधेः प्रविवेके च दर्शनात्।
आरादप्युपकारित्वात् स्वातन्त्र्यं कर्त्तुरिष्यते॥" इति।

अस्यायमर्थः,—इतरव्यापारादावपि स्वव्यापारसत्त्वात् कारकान्तराणां स्वाधीनप्रवृत्तिनिवृत्त्योर्दर्शनात् दात्रादेः कुठारादिवत् स्वस्य प्रतिनिध्यसम्भवात् कारकान्तराप्रयोगेऽपि स्ववाचकपदप्रयोगात्, साक्षाद्धातूपात्तफलजनकव्यापारवत्त्वाच्च कर्त्तुः स्वातन्त्र्यमिति। पाचयति इत्यादावपि प्रयोज्यस्य पाके स्वातन्त्र्यमस्त्येव, वेतनादिलाभरूपस्वार्थ-सिद्धये एव तस्य प्रवृत्तेः ॥ ४१ ॥

क्रिया इति।—एषा खलु "क्रिया" धातुवाच्या फलव्यापारोभयरूपा तद्विशिष्टरूपा वा, "फलव्यापारयोर्धातुः" इत्यभियुक्तवचनात्। अत्र हरिणाऽप्युक्तं—

कर्त्तृस्था, क्वचित् कर्मस्था च। तत्र गमि-पति-प्रभृतीनां कर्त्तृस्थैव क्रिया, (४३) तस्याः पञ्चविध-कर्मान्यतमरूपत्वात्। पचि-भिदिप्रभृतीनां कर्मस्थैव क्रिया, क्वचित् अधःसन्तापनादिरूप-त्वात्, क्वचित् अवयवविभागरूपत्वादिति सङ्क्षेपः।

अथ कर्मलक्षणम्।

परसमवेत-क्रियाजन्यफलशालित्वं (४४) कर्मत्वम्। परसमवेतो यो धात्वर्थस्तज्जन्यं यत् फलं तद्वत्त्वमित्यर्थः। परसमवेतेति विशेषणात् ग्रामं गच्छति इत्यादौ संयोगरूपफलशालित्वेऽपि कर्त्तरि नातिव्याप्तिः; अत एव फलावच्छिन्न-व्यापारबोधकत्वाद्धातोः सकर्मकत्वव्यवहारः।

---

"व्यापारो भावना सैवोत्पादना सैव च क्रिया" इति।

किञ्च—

"यावत् सिद्धमसिद्धं वा साध्यत्वेन प्रतीयते।
आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते॥"

"सिद्धं" वर्त्तमानध्वंसप्रतियोगि, भूतकालमित्यर्थः, तद्भिन्नम् "असिद्धं" वर्त्तमानं भविष्यच्च इत्यर्थः। तेनापचत् पक्ष्यति पचतीत्यादौ सर्वत्र साध्यत्वेन असत्त्वरूपत्वेनाभिधीयमाना क्रियेति क्रियाशब्दस्य रूढ़िरनेन प्रदर्शिता इति भावः॥ ४२॥

तस्या इत्यादि।—"तस्याः" क्रियायाः, "पञ्चविधकर्मणाम्" उत्क्षेप-णापक्षेपणादिप्रकारभेदापन्नस्वरूपाणाम्, "अन्यतमरूपत्वात्" कर्म-विशेषस्वरूपत्वात् कर्त्तृस्थत्वं, तद्भिन्नानां कर्मस्थत्वम् इत्युच्यते॥ ४३॥

कर्मत्वमिति।—"कर्मत्वं" क्रियाजन्यतद्व्यधिकरणफलवत्त्वम्, अथवा

गच्छतीत्यादौ तूत्तरदेशसंयोगफलिका क्रिया गमनं धात्वर्थः । गां ददाति इत्यत्र स्वस्वत्वध्वंसपूर्वकपरस्वत्वोत्पत्त्यवच्छिन्नत्यागो दानं धात्वर्थः; तज्जन्यं फलं स्वस्वत्वध्वंसपूर्वकपरकीयस्वत्वं, तच्छालित्वात् गोः कर्मत्वम् । तण्डुलं पचतीत्यादावधःसन्तापनजन्यविक्लित्तिः फलं, तच्छालित्वात्तण्डुलादेः कर्मत्वम्; अत एव यत्र क्रिया कर्त्तृगता तत्र लक्षणं मुख्यं, यत्र कर्मगता क्रिया तत्र गौणम् । एवम् ओदनं पचतीत्यादावोदनपदेन तण्डुले लक्षणा, विक्लित्तिफलयोगात् । तच्च कर्म (४५) त्रिविधं—प्राप्यं, निर्वर्त्त्यं, विकार्य्यञ्चेति । यत्र कर्मणो धात्वर्थजन्य-

कर्त्रा स्वनिष्ठव्यापारप्रयोज्यफलेन सम्बद्धुमिष्यमाणं कर्मत्वमित्यर्थः ॥ ४४ ॥

त्रिविधमित्यादि ।—अत्रोक्तं हरिणा—

"निर्वर्त्त्यञ्च विकार्य्यञ्च प्राप्यञ्चेति त्रिधा मतम् ।
तच्चेप्सिततमं कर्म चतुर्द्धाऽन्यत्तु कल्पितम् ॥
औदासीन्येन यत् प्राप्यं यच्च कर्त्तुरनीप्सितम् ।
संज्ञान्तरैरनाख्यातं यत् यच्चाप्यन्यपूर्वकम् ॥"

इत्यादिना प्रकारभेदमभिधाय निर्वर्त्त्यादीनां लक्षणमुदाहरति—

"यदसज्जायते सद्वा जन्मना यत् प्रकाशते ।
प्रकृतेस्तु विवक्षायां विकार्य्यं कैश्चिदन्यथा ॥
तन्निर्वर्त्त्यं विकार्य्यञ्च कर्म द्वेधा व्यवस्थितम् ।
प्रकृत्युच्छेदसम्भूतं किञ्चित् काष्ठादिभस्मवत् ।
किञ्चिद्गुणान्तरोत्पत्त्या सुवर्णादिविकारवत् ॥

फलवत्त्वं तत् (४६) प्राप्यम्। यथा गच्छति पश्यति हन्तीत्यादयः। यत्र तु साध्यत्वेन विषयत्वरूपकर्मत्ववत्त्वं तत् (४७) निर्वर्त्त्यम्। यथा—घटं करोति इत्यादयः। एवं घटं करोति इत्यादौ सर्वत्र घटादिपदे मृत्पिण्डादौ लक्षणा, साक्षात्कृत्यादिविषयत्वानुरोधात्; एवं स्मिह्यति द्वेष्टि यजति इत्यादीनाम्। यत्र तु प्रकृत्युच्छेदजनितरूपान्तरवत्त्वं तत् (४८) विकार्य्यम्। यथा—काष्ठं भस्म करोति, दुग्धं दधि करोति, तण्डुलानोदनं पचति, सुवर्णं कुण्डलं करोति। अत्र भस्मादेः

---

क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते।
दर्शनादनुमानाद्वा तत् प्राप्यमिति कथ्यते॥" इति॥ ४५॥

प्राप्यमिति।—क्रियाकृत-साधारण-धर्मप्रकारकप्रतीति-विषयताऽनाश्रयत्वे सति क्रियाजन्यफलवत्त्वेनोद्देश्यत्वं प्राप्यत्वम्। यथा—ग्रामं गच्छतीत्यादौ ग्रामादिः, संयोगरूपफलस्य क्रियाऽधिकरणवृत्तित्वेन साधारण्यात् असाधारणोत्पत्त्यादिफलस्य तत्रासत्त्वात् तथात्वम् इति॥ ४६॥

निर्वर्त्त्यमिति।—प्रकृतिवाचकपदासमभिव्याहृतपदोपस्थाप्यत्वे सति क्रियाजन्योत्पत्तिफलवत्त्वं निर्वर्त्त्यत्वम्। उत्पत्तिश्च आद्यक्षणसम्बन्धरूपा प्रथमप्रकाशरूपा वा, "यदसत्—" इत्याद्युक्तेः।

"सतो वा विद्यमाना वा प्रकृतिः परिणामिनी।
यस्य नाश्रीयते तस्य निर्वर्त्त्यत्वं प्रचक्षते॥"

इत्युक्तेः प्रकृतिवाचकेत्यादि; तथा हि, घटं करोतीत्यादौ घटः, पुत्त्रं प्रसूते इत्यादौ च पुत्त्रादिरिति॥ ४७॥

विकार्य्यमिति।—प्रतीयमानप्रकृतिविकृतिभावत्वे सति क्रियानिर्वाह्य-

कर्मत्वं न काष्ठादेः, भस्मादिषु काष्ठादिसम्बन्ध्यभिन्नत्वबोधनाय भस्मादिपदसमनियतविभक्तिमत्त्वं काष्ठादेः। तथा च, काष्ठसम्बन्ध्यभिन्नभस्मविषयककृत्याश्रय इति शाब्दधीः। (४९) एवमन्यत्रापि बोध्यम्। किन्तु अजां ग्रामं नयति इत्यादिवन्न द्विकर्मकत्वम्, अत्राभिन्नाबोधात्। यथा अजावृत्तिकर्मताऽनुकूला या ग्रामविषयिणी प्राप्तिस्तदनुकूलकृतिमान् इत्यन्वयधीः। एवं गां दोग्धि पयो गोपः इत्यादिबोधे गोसम्बन्धित्वं पयोनिष्ठं ज्ञेयम्। अजा ग्रामं नीयते पान्थेन इत्यादौ पान्थवृत्तिकृतिजन्या या ग्रामविषयिणी प्राप्तिः तज्जन्यफलशालिन्यजेत्यन्वयबुद्धिः। एवं

---

विशिष्टासत्त्वोत्पत्तिरूपान्यतरफलवत्त्वं विकार्य्यत्वम्। यथा—सुवर्णं कुण्डलं करोति इत्यादौ सुवर्णकुण्डलादिः; अत्र सुवर्णस्य पूर्वरूपासत्त्वरूपफलवत्त्वात् कुण्डलस्योत्पत्तिरूपफलवत्त्वाच्च तथात्वम्। इर्य्युक्तलक्षणे सुवर्णस्य किञ्चिद्गुणान्तराधानेन कुण्डलस्योत्पत्तिरित्यवधेयम्। एवं काष्ठं भस्म करोति इत्यादावपि काष्ठभस्मादेः, तत्र च काष्ठस्य क्रियाजन्यविशिष्टासत्त्वप्रयोजकनाशवत्त्वात् तथात्वमिति विवेकः। इर्य्युक्तलक्षणे हि काष्ठप्रकृत्युच्छेदेन भस्मोत्पत्तिः इत्यवगम्यते ॥ ४८ ॥

एवमित्यादि।—"एवम्" उक्तवितयमीप्सिततमं कर्त्तुः क्रियाफलेनोद्दिष्टतमत्वात्। एतद्भिन्नं चतुर्द्धा कल्पितं, पारिभाषिकमित्यर्थः, तानि च उदासीन-द्वेष्याकथितान्यपूर्वकाणि। तत्र कर्त्तुरनुद्देश्यत्वे सति क्रियाजन्यफलवत्त्वमुदासीनत्वम्; यथा—ग्रामं गच्छन् तृणं स्पृशति इत्यादौ

दुह्यते गौः पयो गोपालकेन इत्यादौ गोपालकवृत्तिकृतिजन्य-दोहनजनित-फलशालि-पयोनिमित्ता गौरिति शाब्दधीः। एवं त्रिविधकर्मकारकमध्ये प्राप्यं कर्म मुख्यं, निर्वर्त्त्यं विकार्य्यञ्च गौणमिति सङ्क्षेपः।

## अथ करणलक्षणम्।

(५०) तत्र "साधकतमं करणम्" (१।४।४२ पा०)इति सूत्रम्। "साधकतमञ्च"कारकान्तरासहकृतत्वे सति फलहेतुत्वं, कारकान्तरव्यापारमनुत्पाद्य फलहेतुत्वमित्यर्थः। फलं धात्वर्थताऽवच्छेदकम्। परशुना छिनत्ति वृक्षम्; तृतीयायाः करणत्वमर्थः। एवं मनसा पाटलिपुत्रनगरं गच्छति इति। अथ धर्मेन कुलं, विद्यया यशः

---

तृणादेरुद्देश्यत्वाभावेऽपि क्रियाजन्यसंयोगवत्त्वात् तथात्वम्। द्विष्टसाधनत्वे सति क्रियाजन्यफलवत्त्वं द्वेप्यत्वम्; यथा—अन्नं बुभुक्षमाणो विषं भुङ्क्ते इत्यादौ विषादेः। अपरं पुनरकथितं कर्म, तथा हि, कारकविशेषसंज्ञान्तरेणाविवक्षितत्वे सति कर्मोपकारकत्वम् अकथितत्वम्; यथा—गां दोग्धि पयः इत्यादौ गवादेर्दुग्धोपयोगितया अविवक्षितकारकान्तरसंज्ञकत्वेन च तथात्वम् इत्यादि विवेकतोऽवगन्तव्यम् ॥ ४९ ॥

तत्रेति।—क्रियासिद्धौ यत् प्रकृष्टोपकारकमन्तरङ्गं विवक्षितं तत् करणम्। यद्व्यापारानन्तरं फलनिष्पत्तिस्तत् प्रकृष्ट, सूत्रे तमप्-प्रत्ययेनाव्यवहितव्यापारवत्त्वरूपप्रकर्षाविबोधनात्। यथोक्तं हरिणा—

इत्यादौ तृतीयाया हेतुत्वमर्थः, क्रियाऽन्वयित्वा-भावात्। एवं धूमात् वह्निः, कृतकत्वादनित्यः इत्यादौ पञ्चम्यर्थो हेतुता, धूमपदे धूमज्ञाने, वह्निपदे च वह्निज्ञाने लक्षणा।

## अथ सम्प्रदानलक्षणम्।

"कर्मणा यमभिप्रैति स सम्प्रदानम्"(१।४।३२ पा०)इति सूत्रम्। अस्यार्थः,—करणीभूतकर्मजन्य-फलभागित्वेनोद्देश्यत्वं (५१) सम्प्रदानत्वमित्यर्थः। दा-धातोः स्वस्वत्वध्वंसपूर्वकपरस्वत्वोत्पत्त्यवच्छिन्न-त्यागः, अथवा उद्देश्यगतस्वामित्वसम्पादकत्यागो-ऽर्थः; तेन विप्राय गां ददाति इत्यत्र विप्रोद्देश्यकं

"क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम्।
विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम्॥"

इत्यत्र विवक्ष्यते इत्यनेन कारकान्तराणामपि करणत्वमिति सूचितम्। तदपि उक्तं हरिणा—

"वस्तुतस्तदनिर्देश्यं न हि वस्तु व्यवस्थितम्।
स्थाल्या पच्यत इत्येषः प्रयोगो दृश्यते यतः॥"

इत्यत्र वस्तु करणपदार्थः इति॥ ५०॥

सम्प्रदानत्वमिति।—"सम्प्रदानत्वं" क्रियाजन्यफलभागित्वेनोद्देश्य-त्वम् इत्यर्थः। तच्च त्रिविधम्, अनिराकर्तृ प्रेरकमनुमन्तृ चेति। यथोक्तं हरिणा—

"अनिराकरणात् कर्तुः त्यागाङ्गकर्मणेप्सितम्।
प्रेरणानुमतिभ्याञ्च लभते सम्प्रदानताम्॥"

इत्युक्तदानप्रयोजकव्यापारत्रयभेदात्। तत्राद्यं देवतादि, यथा—

यत् गोवृत्तिस्वत्वं, गोनिरूपितस्वामित्वं वा, तज्जनको यः त्यागस्तदनुकूलकृतिमानित्यन्वयधीः। नारदाय रोचते कलहः इत्यत्र चतुर्थ्याः सम्बन्धित्वमर्थः। तत्र सूत्रं "रुच्यर्थानां प्रीयमाणः" (१।४।३३ पा०) इति। तथा च, नारदसम्बन्धिनी या रुचिस्तद्विषयकलहः इति शाब्दधीः। नृपाय श्लाघते वन्दी इत्यत्र चतुर्थ्याः विषयत्वमर्थः। तत्र सूत्रं "श्लाघ-ह्नुङ्-स्था-शपां ज्ञीप्स्यमानः" (१।४।३४ पा०) इति। "ज्ञीप्स्यमानः" आत्मज्ञापनेच्छाविषयीभूतः; तथा च, नृपाय श्लाघते वन्दी इत्यत्र नृपविषयकात्मज्ञापनेच्छावत्-वन्दीकथनाश्रय इति धीः। एवं विप्राय शतं धारयते शूद्रः इत्यत्र चतुर्थ्यर्थः सम्बन्धित्वम्। "धारेरुत्तमर्णः" (१।४।३५ पा०) इति सूत्रम्। तथा च, विप्रसम्बन्धिशतसङ्ख्याविशिष्ट-द्रव्यकर्मक-ऋणग्रहणाश्रयः शूद्र इति बोधः। देवदत्ताय क्रुध्यति इत्यत्र चतुर्थ्याः कर्मत्वमर्थः। तत्र "क्रुधद्रुहेर्ष्याऽसूयार्थानां यं प्रति कोपः" (१।४।३७ पा०) इति सूत्रम्। तथा च, देवदत्त-कर्मक-क्रोधाश्रय इति बोधः। "क्रोधस्य"

नारायणाय तुलसीं ददाति इत्यत्र कर्त्तुरनिराकरणेन प्रत्यय-प्रतिबन्धात्। द्वितीयं याचकादि, यथा—ब्राह्मणाय गां ददाति,

परविषयकासूयाजनकव्यापारः। "असूया" द्वेषः। पुष्पाय स्पृहयति इत्यत्र चतुर्थ्या ईप्सितकर्मत्वमर्थः। अत्र "स्पृहेरीप्सितम्" (१।४।३६ पा०) इति सूत्रम्। तथा च, पुष्पविषयकस्पृहाश्रय इति बोधः।

### अथ अपादानलक्षणम्।

(५२) "ध्रुवमपायेऽपादानम्" (१।४।२४पा०) इति सूत्रम् "अपाये" विभागविषये यत् "ध्रुवं" विभागजनकक्रियाशून्यं तत् अपादानकारकं भवतीत्यर्थकम्।(५३)"परकीयक्रियाजन्यविभागाश्रयत्वम् अपादानत्वम्" इति नैयायिकलक्षणम्। तदपादानं द्विविधं, (५४) चलमचलञ्चेति। यथा

---

देहि देहीत्यादिना कर्त्तुः प्रेरणात्। तृतीयन्तु गुर्वादि, यथा—गुरवे सर्वस्वं ददाति, प्रार्थनाव्यतिरेकेणानुमतिमात्रेण प्रेरणादिति॥ ५१॥

ध्रुवमित्यादि।—प्रकृतधात्वर्थानाश्रयत्वे सति तज्जन्यविभागाश्रयः ध्रुवं, तच्चार्थात् अवधिरिति। "अपायः" विश्लेषः, विभागः, सम्बन्धध्वंस इति यावत्॥ ५२॥

परकीयेति।—विभागजनक-तत्क्रियाऽनाश्रयत्वे सति तत्क्रियाजन्यविभागाश्रयत्वम् अपादानत्वमिति वा॥ ५३॥

चलमिति।—तत्रोक्तं हरिणा—

"अपाये यदुदासीनं चलं वा यदि वाऽचलम्।
ध्रुवमेव तदावेशात् अपादानमितीष्यते॥"

अत्र "उदासीनम्" अवधिः। "आवेशात्" ईषत्प्रवेशात् इति॥ ५४॥

(५५)वृक्षात् पत्रं पतति इत्यत्र वृक्षरूपमपादानम-चलम्। धावतोऽश्वात् पतितोऽश्ववारः इत्यत्राश्व-रूपापादानं चलम्। अत्र पञ्चम्या अपादानत्वमर्थः, "अपादानत्वम्" अवधित्वम्; तेन वृक्षावधिकाधः-संयोगानुकूला या क्रिया तद्वत् पत्रमिति शाब्दधीः। एवम् अश्वावधिकाधःसंयोगानुकूला या क्रिया तद्वानश्ववार इति। ननु अत्र कथमश्वस्यापादा-नत्वम्? पुरुषाश्वयोर्विभागं प्रति अश्वक्रियाया हेतुत्वादिति चेत्, न, अश्वक्रिया नोभययो-र्विभागहेतुः, किन्तु विभागजनकीभूतपुरुष-क्रियां प्रति अश्वक्रियायाः हेतुत्वात्। हिमवतो गङ्गा प्रभवति इति, "वल्मीकाग्रात् प्रभवति धनुःखण्डमाखण्डलस्य" इत्यत्र पञ्चम्या अव-च्छेदकत्वमर्थः। तत्र "भुवः प्रभवः" (१।४।३१ पा०) इति सूत्रम्। "प्रभवः" आद्यप्रकाशः; तेन हिमवदवच्छिन्नाद्यप्रकाशोत्पत्तिमती गङ्गा। एव-मन्यत्रापि बोध्यम्। सामग्रीतः फलं जायते इत्यादौ पञ्चम्यर्थो हेतुता। तत्र "जनिकर्त्तुः प्रकृतिः" (१।४।३०पा०) इति सूत्रम्। "प्रकृतिः"

---

वृक्षादिति।—अत्र काकादिभिरानीतफलस्य अन्यवृक्षात् पतने तद्वृक्षस्यावयवत्वाभावात् पञ्चमी। अवयवावयविभावे तु सम्बन्धविवक्षायां षष्ठ्येव ॥ ५५ ॥

फलोन्मुखीभूतः कारणकलापः,तेन सामग्रीहेतुका या उत्पत्तिस्तत्प्रतियोगि फलमिति शाब्दधीः। अध्ययनात् पराजयते चैत्रः इत्यादौ पञ्चम्यर्थो विषयता, तत्र "पराजेरसोढ़ः"(१।४।२६पा०) इति सूत्रम्। परा-पूर्वक-जिधातु-योगे असोढ़ः अपादानम्।"असोढ़त्वम्" असाध्यत्वम्। "पराजयः" निवृत्तिः। तेनाध्ययनविषयक-निवृत्तिमांश्चैत्र इति शाब्दधीः। शत्रून् पराजयते इत्यत्र"पराजयः"परिभवः। शत्रुस्तु पराभवविषय एवातो न पञ्चमी। कूपादन्धं वारयति इत्यत्र पञ्चम्यर्थः केवलमवधित्वम्। तत्र "वारणार्थानामीप्सितम्" (१।४।२७ पा०)इति सूत्रम्। कूपोऽपि पुरो गम्यदेशत्वेनेप्सितो भवत्येव, तेन कूपावधिकं यन्निवारणं तदनुकूलकृतिमानित्यन्वयधीः। अत्र कूपस्य न ध्रुवत्वम्, अन्ध-कूपयोः संयोगविरहात्। "अन्धत्वं" गोलकाभाववत्त्वे सति चक्षुःशून्योभयगोलक-तत्सामान्याभावान्यतरवत्त्वम्।"काणत्वं" चक्षुर्युतैकगोलकमात्रवत्त्वम्। चौरात् बिभेति, व्याघ्रात् बिभेति, दस्युभ्यो रक्षति इत्यादौ पञ्चम्यर्थो हेतुता। तत्र "भीत्रार्थानां भयहेतुः" (१।४।२४पा०)इति सूत्रम्। भयार्थक-त्राणार्थक-

धातुयोगे यो हेतुस्तत् अपादानं भवतीत्यर्थः। अत्र हेतोर्यदपादानत्वं विहितं तत् तृतीया-निवारणार्थमेव। उपाध्यायादन्तर्धत्ते छात्रः इत्यत्रापि पञ्चम्या हेतुत्वं तृतीयावारणार्थमेव। तत्र सूत्रम् "अन्तर्द्धौ येनादर्शनमिच्छति" (१।४।२८ पा०) इति। "अन्तर्द्धिः" आत्मसङ्गोपनम्; तथा च, उपाध्यायहेतुकं यदात्मसङ्गोपनं तद्विषयिणी या इच्छा तदाश्रयश्छात्र इति बोधः। उपाध्याया-दधीते इत्यत्र पञ्चम्यर्थो हेतुता। तत्र सूत्रम् "आख्यातोपयोगे" (१।४।२९ पा०) इति। अत्रा-पादानत्वविधानं तृतीयावारणार्थम्। "आख्याता" वक्ता। नियमात् वाक्यग्रहणे आख्याताऽपादानं भवति, तथा च, उपाध्यायहेतुकं यन्नियम-पूर्वकग्रहणं तदनुकूलकृतिमानिति धीः।

## अथाधिकरणलक्षणम्।

तत्र पाणिनिसूत्रम् "आधारोऽधिकरणम्" (१।४ ४५ पा०)। "आधारः" अत्राश्रयः। "कर्त्तृकर्मा-न्यतरद्वारा क्रियाश्रयत्वे सति तत्क्रियोपकारक-त्वम् (५६) अधिकरणत्वम्" इति नैयायिकाः।

---

अधिकरणत्वमिति।—आध्रियन्ते क्रियाः यस्मिन्निति "आधार." कर्त्तृ-कर्मव्यवहितक्रियाश्रय इति स्पष्टं, स एवाधिकरणम्। अत्रोक्तं हरिणा—

অত্র "উপকারকত্বং" নিষ্পাদকত্বম্; তেন পীঠে স্থিত্বা গৃহে স্থাল্যামোদনং পচতি ইত্যত্র সপ্তম্যর্থোऽধিকরণত্বম্। অত্র কর্ত্তৃপ্রভৃতীনামতিব্যাপ্তিবারণায় সত্যন্তম্। গেহস্য তু পাকক্রিয়াশ্রয়ত্বং, তদুপকারকত্বঞ্চ কর্ত্তৃদ্বারা, স্থাল্যাশ্চ ওদনরূপকর্ম্মদ্বারা ক্রিয়াশ্রয়ত্বং, তদুপকারকত্বঞ্চেতি বোধ্যম্। পীঠস্য তু স্থিতিক্রিয়াऽপেক্ষয়া এব নিষ্কর্ষঃ।

## অথ সমাসবাদঃ।

(৫৭) তত্র সমাসত্বমখণ্ডোপাধিবিশেষঃ,

---

"কর্ত্তৃকর্ম্মব্যবহিতামসাক্ষাৎ ধারয়ৎ ক্রিয়াম্।
উপকুর্ব্বৎ ক্রিয়াসিদ্ধৌ শাস্ত্রেऽধিকরণং স্মৃতম্॥" ইতি।

তচ্চ চতুর্বিধং—"সামীপ্যাশ্লেষবিষয়ৈর্ব্যাপ্ত্যাধারশ্চতুর্বিধঃ" ইতি ভেদকসম্বন্ধচাতুর্বিধ্যাৎ। তত্র সামীপ্যসম্বন্ধেন প্রথমোদাহরণং—বনে নদী আস্তে ইত্যাদৌ বনাদিঃ সামীপ্যসম্বন্ধেনাধারঃ। দ্বিতীয়ম্ একদেশসম্বন্ধেন যথা—কটে আস্তে ইত্যাদৌ কটাদিঃ আশ্লেষাধিকরণম্। তৃতীয়ং বিষয়তাসম্বন্ধেন যথা—মোক্ষে ইচ্ছাऽস্তি ইত্যাদৌ মোক্ষাদিঃ বিষয়াধার.। ব্যাপ্তিসম্বন্ধেন চতুর্থং যথা—তৈলং তিলেষু ইত্যাদৌ তিলাদিব্যাপ্ত্যাধার ইতি॥ ৫৬॥

তত্রেতি।—"সমাসত্বং" নাম শক্তিসম্বন্ধেন সমাসপদত্বম্ একার্থীভাবাপন্নশক্তিসমুদায়ত্বং বা, সমস্যতে সংক্ষিপ্যতে একার্থীক্রিয়তে অসৌ ইতি ব্যুৎপত্তেঃ। দ্ব্যাদিপদানামেকপদতাসম্পাদকপদসাধুতার্থকাখণ্ডোপাধিবিশিষ্টত্বং সমাসত্বম্ ইতি ফলিতার্থঃ। স চ সমাসঃ ষড়্বিধঃ; তথা হি—

न तु कर्मधारयादिषड्न्यतमत्वम्, (५८) आत्माश्रयत्वात्। नैयायिकमते तु "समासे (५९) न

"सुपा सुपा तिङा नाम्ना धातुनाऽथ तिङां तिङा।
सुबन्तेनेति विज्ञेयः समासः षड्विधो बुधैः॥" इति।

तत्र क्रमेणोदाहरणम्। सुपां सुपेति द्वयमपि पदं सुबन्तं, यथा—राजपुरुषः इति। सुपां तिङेति पूर्वपदं सुबन्तम्, उत्तरं तिङन्तं, यथा—पर्य्यभूषयत् इत्यादि, "गतिमतोदात्तवता तिङाऽपि समासः" इति वार्त्तिकोक्तेः। सुपां नाम्नेति पूर्वपदं सुबन्तमुत्तरं नाम, यथा—कुम्भकारः इत्यादि, "उपपदमतिङ्" इत्युक्तविधानात् समासः, "गतिकारकोपपदानां कृद्भिः समासवचनं प्राक् सुबुत्पत्तेः" इति परिभाषया सुबुत्पत्तेः प्रागेव नाम्ना समासः सिद्धः, अन्यथा चर्मक्रदित्यादौ नलोपानुपपत्तेः। सुपां धातुनेति उत्तरपदं धातुमात्रं न तिङन्तं, यथा—कटप्रूरित्यादि, "क्विब्वचिप्रच्छ्यायतस्तुकटप्रूजुश्रीणां दीर्घोऽसम्प्रसारणञ्च" इति वार्त्तिकात् समासः। तिङां तिङा, यथा—पिबत-खादता-पचत-भृज्जता इत्यादिः, "आख्यातमाख्यातेन क्रियासातत्ये" इति मयूरव्यंसकाद्यन्तर्गणीयसूत्रात्। तिङां सुबन्तेन, यथा—जहिस्तम्बः, "जहिकर्मणा बहुलमाभीक्ष्ण्ये कर्त्तारञ्चाभिदधाति" इति मयूरव्यंसकाद्यन्तर्गणीयविधानात् समासः। अयं षड्विधः समासविभाग इति॥ ५७॥

आत्मेति।—स्वस्य सापेक्षितत्वेऽनिष्टप्रसङ्गः आत्माश्रयः। स खलु उत्पत्तिस्थितिज्ञप्तिभिस्त्रिधा। तथा हि, यदीदं समासत्वं समासत्वजन्यं स्यात् तदेतत् समासत्वानधिकरणक्षणोत्तरवर्त्ति न स्यात्। यदीदं समासत्वम् एतत्समासत्ववृत्ति स्यात् तदेतत् समासत्वव्याप्य न स्यात्, यदीदं समासत्वं समासत्वज्ञानाभिन्नं स्यात् (ज्ञानसामग्रीभिन्नं स्यात्) तर्हि एतत् समासत्वभिन्नं स्यात्। एतदवयवः आत्माश्रयः। अतः कर्मधारयादीनामन्यतमेऽसम्भावनेति बोध्यम्॥ ५८॥

नेति।—नैयायिका वाक्ये शक्तिलक्षणे न स्वीकुर्वन्ति, तन्मते पदे एव शक्तिर्लक्षणा च॥ ५९॥

शक्तिर्न वा लक्षणा, वाक्यत्वात्"। शक्तिलक्षणान्यतरसम्बन्धस्तु पदनिष्ठ एव, तदर्थावगतिस्तु क्वचित् पूर्वपदे क्वचिदुत्तरपदे क्वचिदुभयपदे वा लक्षणयेति। समासकरणञ्च पदसंस्कारार्थमेवेति ज्ञेयम्। किन्तु व्यासकालीनतत्तद्वाक्यार्थबोधानुकूलतत्तत्पदार्थोपस्थितिः क्लृप्तशक्तिकतत्तत्पदसमूहस्यैव शक्तिलक्षणान्यतरसम्बन्धेन समासकालेऽपि तज्जातीयशक्यार्थबोधानुकूलपदार्थोपस्थितिहेतुत्वं कल्प्यते लाघवात्। न तु वाक्यस्य पदत्वं, तत्पदस्यातिरिक्ताऽपि शक्तिः कल्प्या गौरवात्। ननु नित्यसमासस्थले पङ्कजादिपदे का गतिः? तत्र व्यासाभावेन क्लृप्तशक्तिकपदाभावादिति चेत्, न; तत्रागत्या उभययोः समाधानसाम्यात्; तथा हि, समुदायशक्त्यनुरोधात् समुदायस्य पदत्वम्, अस्यावयवशक्त्यनुरोधेन पदैकदेशस्यापि पदत्वं भवद्भिः कल्पनीयम्। समानयोः यत्रोभययोः समो दोषः परिहारोऽपि तत्सम इति प्रवादोऽपि साधुरिति।

अथ कर्मधारयलक्षणम्।

(६०) द्विगुभिन्नत्वे सति समानविभक्तिमत्-

---

द्विगुभिन्नत्वे इत्यादि।—द्विगुविषयपरिहारेण समानाधिकरणपद-

पदप्रकृतिकत्वे सति अभेदबोधकत्वं कर्मधारयत्वम्। तेन नीलोत्पलमित्यत्र नीलपदेन नीलगुणविशिष्टं वस्तु, उत्पलपदेन उत्पलसामान्यमुपस्थाप्यते, अभेदाख्यसंसर्गद्वारा नीलाभिन्नमुत्पलमिति शाब्दधीः। नामार्थयोरभेदान्वयबोधं प्रति विरुद्धविभक्तिराहित्यस्य कारणत्वम्। एवं कर्मधारये न वा शक्तिर्न वा लक्षणा। अत एव (६१) निषादस्थपतिं याजयेत् इत्यत्र न षष्ठीतत्पुरुषः, न वा बहुव्रीहिः, पूर्वपदे परपदे वा लक्षणापत्तेः। तथा चात्र कर्मधारयसमासान्निषादाभिन्नस्थपतियाजनमिति बोधः। न च निषादस्य सङ्करजातिविशेषत्वात् वेदानधिकारात् याजनासम्भव इति वाच्यम्, अपूर्वविद्याप्रयुक्तेस्तत्र कल्प्यत्वात्। विद्याप्रयुक्तिस्तु निषिद्धकर्मकमन्त्रपाठ इति।

---

घटिततत्पुरुष. कर्मधारयः, "तत्पुरुषः समानाधिकरणः कर्मधारय." (१।२।४२ पा०) इति सूत्रात्। तत्राप्यपवादविधेर्बलवत्त्वात् "विशेषणं विशेष्येण" (२।१।५७ पा०) इति विधिर्बलीयान्। एवं किल कर्मधारयः। सुतरां तत्र समानविभक्तिमत्पदकदम्बकत्वम् अभेदबोधकत्वञ्चेति। उत्तर पदप्रधानोऽयं समासः ॥६०॥

निषादेत्यादि।—तत्पुरुषे पूर्वपदे बहुव्रीहौ तूत्तरपदे लक्षणया अर्थप्रतीतिः। इह च लक्षणामन्तरेणैव शक्यार्थेन तात्पर्य्योपपत्तौ लक्षणाकल्पनेनाप्यलमिति ॥ ६१ ॥

## अथ तत्पुरुषलक्षणम्।

असमानविभक्तिमत्प्रातिपदिकप्रकृतिकत्वे सति अभेदबोधकपदत्वं(६२) तत्पुरुषत्वम्। राजपुरुष इत्यत्र पूर्वपदे लक्षणया राज-सम्बन्धित्वमवगम्यते, तेन राजसम्बन्ध्यभिन्नः पुरुष इत्यर्थः। नामार्थ-द्वयाभेदबोधं प्रति विरुद्धविभक्तेरभावस्य तन्त्र-त्वात्; अन्यथा पुरुषपदार्थे राजपदार्थस्य साक्षादन्वयो न स्यात्, निपातातिरिक्तनामार्थयो-र्भेदेन साक्षादन्वयस्याव्युत्पन्नत्वात्; तथा च, तादृशबोधं प्रति द्वारीभूतविभक्तिरपेक्षणीयेति बोध्यम्। न च राजपुरुष इत्यत्र पुरुषपदे राज-सम्बन्धिनि लक्षणा, राजपदन्तु तात्पर्य्यग्राहक-मिति कथं वाच्यम्? "उत्तरपदार्थप्रधान-स्तत्पुरुषः" इति व्युत्पत्तेर्विरोधात्, पूर्वपदस्य च निरर्थकत्वात्।

अत एव चन्द्र इव मुखम् इत्यत्र इवार्था-न्वयबोधे चन्द्रपदोत्तरषष्ठी नापेक्षते, प्रथमा च

---

तत्पुरुषत्वमिति।—"तत्पुरुषत्वं" प्राधान्येनोत्तरपदार्थबोधकत्वञ्चेति। इह खलु पूर्वपदस्य लक्षणया उत्तरपदार्थावगमन्नसौकर्य्यम्। अर्द्धकायादे-रुत्तरपदार्थत्वाभावेऽपि "अर्द्धं नपुंसकम्" (२।२।२ पा०) इत्यादिविशेषविधानेन तत्प्रकरणविहितत्वादेव तत्पुरुषत्वम्॥ ६२॥

साधुत्वार्था। न च दधि पश्यति इतिवत् लुप्तविभक्तेरनुसन्धानेन तादृशबोधः सुलभ इति वाच्यं, तदनभिज्ञस्य तादृशबोधानुदयापत्तेः। राज्ञः पुरुष इत्यत्र राजपदोत्तरषष्ठ्या राजसम्बन्धस्य पुरुषपदेन च पुरुषस्याश्रयत्वसंसर्गेणोपस्थितिः राजसम्बन्ध्याश्रयः पुरुष इति शाब्दधीः।

### अथ द्विगुलक्षणम्।

समानविभक्तिमत्पदप्रकृतिकत्वे सति अभेदबोधकसङ्ख्यापूर्वपदत्वं (६३) द्विगुत्वम्। पञ्चपुलीत्यादौ पञ्चानां पुलानां समाहार इति व्युत्पत्तेः पुलपञ्चकस्य समाहार इति बोधः। समाहारोऽपेक्षाबुद्धिविषयत्वं, तेन पुलपदेन लक्षणया पञ्चपुलसमाहारो बोध्यते। पञ्चपदञ्च तात्पर्य्यग्राहकमिति बोधः।

### अथ बहुव्रीहिलक्षणम्।

नञ्-तत्पुरुषभिन्नत्वे सति उत्तरपदलाक्षणिकपदवत्त्वं (६४) बहुव्रीहित्वम्। चित्रगु-

---

द्विगुत्वमिति।—"द्विगुत्वं" संज्ञाऽनवबोधकसङ्ख्यापूर्वकसमानाधिकरणपदघटिततत्पुरुषत्व द्विगुत्वमिति। "दिक्सङ्ख्ये संज्ञायाम्" (२।१।५० पा०) इति सूत्रेण विहितपञ्चाम्रादिकर्मधारयादिषु अतिप्रसङ्गवारणाय संज्ञाऽनवबोधकेति। "सङ्ख्यापूर्वो द्विगुः" (२।१।५२ पा०) इति सूत्रात् सङ्ख्यापूर्वकेति। द्विमूर्द्धादौ तथात्ववारणाय तत्पुरुषेति ॥ ६३ ॥

बहुव्रीहित्वमिति।—"बहुव्रीहित्वं" समस्यमानपदातिरिक्तपदार्थ-

रित्यत्र गो-पदं गो-स्वामिनि लाक्षणिकं, चित्र-पदञ्च चित्ररूपविशिष्टगवि लाक्षणिकम्। तत्र चित्र-पदार्थस्य अपरपदार्थैकदेशे गवि अभेदान्वयः; तेन चित्राभिन्न-गो-स्वामीति वाक्यार्थ-बोधः। अथवा गो-पदं गो-स्वामिनि लाक्षणिकं, चित्र-पदञ्च तात्पर्य्यग्राहकमिति बोधः। तेन "पदार्थः पदार्थेनान्वेति, न तु पदार्थैकदेशे" इति व्युत्पत्तेर्न भङ्गः। ननु चित्रगुरित्यादौ विनिगमना-विरहेण (एकतरपक्षसम्पातिनी युक्तिः विनि-गमना तदभावेन इत्यर्थः) उभयपदे च लक्षणा कथं नोच्यते? इति चेन्न, शक्तपदसमभिव्याहारं विना लाक्षणिकपदस्यानुभविकत्वाभावात्। न च पूर्वपदे एव लक्षणेति वाच्यम्, उत्तरपदार्थस्य लाक्षणिकेऽर्थे साक्षादन्वयाभावात्। न च

---

बोधकत्वञ्चेति। स च द्विविधः,—तद्गुणसंविज्ञानः अतद्गुणसंविज्ञानश्च। समुदायोपस्थाप्ये गुणीभूतस्यापि पदार्थस्य समुदायान्विते अन्वयबोधकः तद्गुणबहुव्रीहिः, यथा—लम्बकर्णमानय इत्यादौ कर्णस्याप्यानयने-ऽन्वयः, तद्विना धर्म्मिणोऽप्यानयनासम्भवात्, सम्भवे वा तद्वैशिष्ट्ये-नैवानयनान्वयात् तस्यानयनेऽन्वयः। तद्भिन्नः अतद्गुणः; तथा हि—दृष्टसमुद्रमानय इत्यादौ समुद्रस्यानयनानन्वयात् तथात्वमिति। किञ्च, समानाधिकरणपदघटितः व्यधिकरणपदघटितश्चेति पुनर्द्विविधः। तत्र समानाधिकरणबहुव्रीहिर्यथा—नीलाम्बरादिः। व्यधिकरणसमासे तु दण्डपाणिः इत्यादिः॥ ६४॥

समासोत्तरपदं तात्पर्य्यग्राहकमिति वाच्यं, पूर्वपदस्य गवोपस्थापकत्वाभावात्। नञ्-तत्पुरुषस्थले तु अब्राह्मण इत्यत्र ब्राह्मणपदस्य ब्राह्मणसदृशे लक्षणा, नञ्-पदन्तु तात्पर्य्यग्राहकमतो नञ्-तत्पुरुषभिन्नत्वे सति इति विशेषणमिति।

### अथ द्वन्द्वलक्षणम्।

पदजन्यप्रतिपत्तिविषयभेदबोधकत्वे सति समानविभक्तिमत्पदप्रकृतिकत्वं (६५) द्वन्द्वत्वम्। स च द्वन्द्वस्यार्थे, च-कारार्थो भेदः। तत्र किं पदार्थभेदे किं-वा पदार्थताऽवच्छेदकभेदे शक्तिः? तत्र नाद्यः; "प्रमाणप्रमेय" इत्यादि गौतमकृतन्यायाद्यसूत्रे, "अथैकदन्तहेरम्ब" इत्यादिपर्य्याये, नीलघटयोरभेद इत्यत्र च पदार्थाभेदसत्त्वेऽपि द्वन्द्वस्य दर्शनात्। नान्त्यः; घटा इति स्वरूपैकशेषे द्वन्द्वापवादके व्यभिचारात्। कथमस्य द्वन्द्वापवादकत्वम्? तस्य उत्सर्गापवादभावयोः समानविषयकत्वेन नियन्त्रितत्वात्। न च घटा इत्यत्र स्वरूपैकशेषे किं मानम्?

---

द्वन्द्वत्वमिति।—"द्वन्द्वत्वं" प्राधान्येन सर्वपदार्थबोधकत्वञ्च। प्राधान्यञ्चात्र स्वघटकपदार्थेषु विशेषणताऽनापन्नत्वम्; तेन परस्परं विशेष्यत्वा-

इति वाच्यम्; "सकृदुच्चरितः शब्दः सकृदर्थं गमयति" इत्यादिव्युत्पत्त्या त्रिचतुरादिघटोपस्थापकत्वाभावात्। न च घटपदात् घटत्वसामान्यलक्षणाप्रत्यासत्त्या घटमात्रोपस्थितौ तात्पर्य्यवशात् त्रिचतुरादिघटोपस्थितिः क्लिष्टेनेति वाच्यम्; हरय इत्यत्र तस्यावश्यकल्पनात्। न हि अत्र हरित्वमनेकमस्ति, घटा इति सर्ववादिसिद्धैकशेषलोपप्रसङ्गाच्च। अत एवात्र वदन्ति, क्वचित् पदार्थभेदे, क्वचित् पदार्थताऽवच्छेदकभेदे च द्वन्द्वस्य दर्शनात् उभयभेदेऽपि शक्तिः। न चाननुगमो जातः, पदजन्यप्रतिपत्तिविषयत्वेनैवोभयानुगमात्। तथा चात्र यद्भेदेनैव द्वन्द्वः तत्रैव द्वित्व-बहुत्वान्वयः, अनयोर्भेदसापेक्षत्वात्। न चैकपदे द्वन्द्वापत्तिरिति वाच्यम्; "सुप्सुपा" इति समासाधिकारसामान्याभावात्। स च द्विविधः, इतरेतरः, समाहारश्च। इतरेतरस्थले साहित्यं विशेष्यत्वेन भासते, समाहारे तु विशेषणत्वेन इति विशेषः। "साहित्यञ्च" एकक्रियाऽन्वयित्वम्। तत् यथा धव-खदिर-पलाशां-

---

भावेऽपि नासम्भवः। स च द्वन्द्वः द्विविधः,—इतरेतरः समाहारश्चेति भेदात्। अगृहीतविशेषद्वित्वादिसङ्ख्याविशिष्टनानार्थबोधकत्वम् इतरेतरत्वम्। नानार्थवृत्तितादृशसङ्ख्याबोधकत्वं समाहारत्वमिति ॥ ६५ ॥

च्छिनत्ति इत्यत्र धव-खदिर-पलाश-प्रतियोगिकं यत् साहित्यं, तन्निरूपितं यदवयवविभागरूपफलं, तज्जनिका या छिदाक्रिया, तदनुकूलकृतिमान् चैत्र इति शाब्दबोधः। निरूपितत्वमत्र सामानाधिकरण्यम्। धव-खदिर-पलाशांश्छिन्धीत्यत्र साहित्याश्रयीभूतं यद्धवादि, तद्वृत्ति यत् फलं, तज्जनिका या छिदाक्रिया, तदनुकूलकृतिमान् त्वम् इति बोधः। अथवा इतरेतरस्थले द्वित्व-बहुत्वप्रकारकपदार्थोपस्थितिमात्रं, समाहारे तु प्रत्येकपदार्थानुगतमेकत्वं भासते, न तु उभय-साहित्यमेकक्रियाऽन्वयित्वरूपं भासते। न च साहित्यं "सहभावविवक्षायां वृत्तिः द्वन्द्वैक-शेषयोः" इति व्युत्पत्तेः का गतिः? इति वाच्यम्; तत्रापेक्षाबुद्धिविशेषविषयत्वरूपसाहित्यावगतत्वादिति।

अथ अव्ययीभावलक्षणम्।

समासघटकत्वे सति नानाविभक्तिषु एकरूपतावत्पदत्वम् (६६) अव्ययीभावत्वम्। अत्र

अव्ययीभावत्वमिति।—"अव्ययीभावत्व" प्रधानतः पूर्वपदार्थबोधकत्वञ्च। तत्र पूर्वपदमव्ययं, परपदमनव्ययं, तद्वशेन समुदायोऽव्ययानव्ययः अव्ययीभवति इत्यव्ययीभावः। तिष्ठद्गुप्रभृतीनान्तु तत्प्रकरणा-

पूर्वपदार्थस्यैव प्राधान्यं भासते। (६७) उपकुम्भमित्यत्र कुम्भावधिकाल्पदेशसंयोगीति सङ्क्षेप इति।

## अथ निर्द्धारणम्।

जात्यादि-विशेषण-विशिष्ट-यद्धर्मावच्छिन्नस्य तादृशविशेषणशून्यतद्धर्मावच्छिन्नव्यावृत्तत्वविशिष्ट-विधेयवत्तया प्रतिपादनं निर्द्धारणम्।

तत्र जातिगुणक्रियाणामन्यतमेन समुदायादेकदेशस्य पृथक्करणं (६८) निर्द्धारणम्। विलक्षणधर्मवत्त्वेन निरूपणं पृथक्करणम्। एवञ्च यत्पदसमभिव्याहृता षष्ठी तदुपस्थाप्यतदन्यपदार्थसमुदाये तद्धर्मवत्त्वाभावः इति षष्ठ्या उपस्थाप्यते इति बोध्यम्। (६९) क्रमेणोदाहरणं—

---

विहितत्वात् अव्ययीभावत्वं, सर्वेषामेव समासलक्षणानां प्रायिकत्वस्य शास्त्रादौ स्वीकारात्। यथोक्तमभियुक्तैः,—

"समासस्तु चतुर्द्धेति प्रायोवादस्तथाऽपरः।
योऽयं पूर्वपदार्थादि-प्राधान्यविषयः स च॥"

इति प्राधान्येन पूर्वपदार्थादिबोधकत्वलक्षणविभागोऽपि प्रायिक इति भावः॥६६॥

उपकुम्भमिति।—"उपकुम्भं" कुम्भसमीपे इति वाक्यार्थः॥६७॥

निर्द्धारणमिति।—"निर्द्धारणं" विशेष्यस्य स्वेतरसामान्यव्यावृत्तधर्मवत्त्वम्॥६८॥

क्रमेणेति।—तत्र क्रमेण जातिगुणक्रियाणामुदाहरणानि। तथा

नराणां क्षत्रियः शूरः इति क्षत्रियान्यनर-निष्ठान्योऽन्याभावप्रतियोगिशूरतमाभिन्नः क्षत्रियः नरः इति अन्वयबोधः। एवं सर्वत्र क्रिया-गुणस्थले बोध्यम्। नराणां क्षत्रियः शूरतमः इति नरसामान्यमध्ये क्षत्रियत्व-जात्यवच्छिन्ननरे शौर्य्यं, तदन्यनरे तदभाव इति भावाभावान्वयबोधः। एवं गवां मध्ये कृष्णा गौः सम्पन्नक्षीरतमा इति गोसामान्य-मध्ये कृष्णरूपवत्यां गवि सम्पन्नक्षीरतमत्वं, तदन्यगवि तदभाव इति। एवम् अध्वगानां रथिनः शीघ्रगतयः इति अध्वगसामान्य-मध्ये रथारूढ़ा अध्वगाः शीघ्रगामिणः, तदन्ये अध्वगाः नेति भावाभावान्वयधीः।

अथ एव-कारविचारः।

तस्य व्यवच्छेदकत्वमेव शक्यताऽवच्छेदकं, व्यवच्छेदः शक्यः, व्यवच्छेदो विरहः। विशेष-स्वेतावान्, क्रियासमभिव्याहृतस्यैव-कारस्यात्यन्ता-योगव्यवच्छेदे, विशेषणसङ्गतैव-कारस्यायोगव्यव-

हि, नराणा क्षत्रियः शूरः इत्यत्र क्षत्रियत्वं जातिः। गवां मध्ये कृष्णा गौः सम्पन्नक्षीरतमा इत्यत्र कृष्णत्वं गुणः। अध्वगाना रथिनः शीघ्रगतयः इत्यत्र शीघ्रगमनं क्रिया ॥६८॥

च्छेदे, विशेष्यसङ्गतैव-कारस्यान्ययोगव्यवच्छेदे शक्तिर्बोध्या। तत्र क्रमेणोदाहरणं—(७०) नीलं सरोजं भवत्येव इत्यत्र प्रकृतेरन्वयिता-ऽवच्छेदकसरोजत्वसामानाधिकरण्येन नील-त्वान्वयः; तथा च, सरोजं क्वचिन्नीलं, क्वचि-दनीलमपि भवतीत्यन्वयबोधः। (७१) शङ्खः पाण्डर एव इत्यत्र शङ्खे पाण्डरत्वं तद-योगव्यवच्छेदस्य; तथा च, अन्वयिताव्यवच्छेदक-शङ्खत्वावच्छेदे पाण्डरत्वायोगव्यवच्छेद इत्य-न्वयबोधः। (७२) पार्थ एव धनुर्धरः इत्यत्र धनुर्धरपदं प्रकृष्टधनुर्धरलक्षकम्; तेन पार्थे प्रकृष्टधनुर्धरत्वं, तदन्यस्मिन् तदभाव-बोधः; तथा च, पार्थः प्रकृष्टधनुर्धरः, तदन्यो नेत्यर्थः। अथवा धनुर्धरे पार्थतादात्म्ययोगः, तदन्यस्मिन् तादात्म्ययोगव्यवच्छेदस्येति।

---

नीलमित्यादि।—अत्यन्तायोगव्यवच्छेदे यथा—नीलमित्यादि, अत्र सरोजे नीलत्वात्यन्तायोगः व्यवच्छिद्यते ॥७०॥

शङ्ख इत्यादि।—शङ्खः पाण्डर एव इत्यत्रायोगव्यवच्छेदः, शङ्खे पाण्डरत्वायोगो व्यवच्छिद्यते ॥७१॥

पार्थ इत्यादि।—अन्ययोगव्यवच्छेदे यथा—पार्थः एव धनुर्द्धरः इत्यत्र पार्थान्यपदार्थे प्रशस्तधनुर्द्धरत्वं व्यवच्छिद्यते ॥७२॥

### अथ (७३) सर्वनामपदशक्तिविचारः।

तस्य शक्यं घटादिकं, शक्यताऽवच्छेदकञ्च घटत्वादिकम्। तमानयेत्यत्र शक्तिग्रहपदार्थोपस्थिति-शाब्दबोधानां घटत्वादिप्रकारकत्वात् तेषां समानप्रकारकत्वेनैव कार्य्यकारणभावात् बुद्धिविषयत्वेनैव तेषामनुगमः। बुद्धिविषयवर्त्तित्वेन शक्यताऽवच्छेदकानामनुगम इति विशेषः। तथा च, हरि-पदादिवन्नानार्थमेव, तात्पर्य्यग्रहस्तु प्रकरणादिवत्पूर्वसङ्केतोपस्थितिरिति नवीनतार्किकाः। केचित् तु सर्वनामपदस्य क्वचित् प्रक्रान्ते, क्वचित् प्रक्रस्यमाणे च शक्तिः। उभयोरनुगमकं बुद्धिविषयत्वं, तदेव शक्यताऽवच्छेदकमित्याहुः।

### (७४) अथ इव-शब्दविचारः।

चन्द्र इव मुखम् इत्यत्र चन्द्र-पदं चन्द्रपरम्, इव-पदं सादृश्यपरं, मुख-पदं मुख-

---

सर्वनामेति।—वक्तृ-बुद्धि-विषयताऽवच्छेदकत्वोपलक्षित-धर्मावच्छिन्नं, स्वोच्चारणानुकूलबुद्धिप्रकारविशिष्टं वा सर्वनामार्थः। सोऽयं वो विदधातु वाञ्छितफलम् इत्यादौ तच्छब्दार्थः ॥७३॥

अथेत्यादि।—अथेत्यादौ इवेत्यस्य उपमायाम्, उत्प्रेक्षायां, वाक्यालङ्कारे, ईषदर्थे च शक्तिरवगन्तव्या। तत्रोपमायाम् "इवेन नित्यसमासः विभक्त्यलोपश्च" इति वार्त्तिकोक्तनित्यसमासः विभक्त्यलोपश्च एतदर्थत्र

परम्। प्रतियोगित्वं संसर्गः। तत्र चन्द्र-पदस्य प्रतियोगितया सादृश्ये, सादृश्यस्याश्रयतया मुखे अन्वयः; तथा च, चन्द्रप्रतियोगिक-सादृश्याश्रयं मुखमित्यन्वयधीः, तन्न; चन्द्रमिव मुखं पश्यामीत्यत्र द्वितीयाऽनुपपत्तेः, (७५) चन्द्र-मुखयोरभेदाभावात्। अत एव चन्द्र-पदं चन्द्रसदृशे लाक्षणिकम्, इव-पदं तात्पर्य्य-ग्राहकं, चन्द्रपदोत्तरद्वितीयाया विशेषण-विभक्तित्वेनाभेदबोधकत्वात् चन्द्रसदृशाभिन्न-मुखमहं पश्यामीति भावः। निपातातिरिक्त-नामार्थयोर्भेदेनान्वयबोधं प्रति प्रकारीभूत-विभक्त्यर्थोपस्थितेस्तन्त्रत्वात्; तेन इवार्थान्वय-बोधेन षष्ठ्यपेक्षया प्रथमा साधुत्वार्था इति निष्कर्षः।

अथ (७६) उद्देश्यविधेयभावः।

तत्र उद्देश्यताऽवच्छेदकविधेयताऽवच्छेदकयोः

---

ज्ञातव्यमित्युच्यते। तथा हि, "वागर्थाविव सम्पृक्तौ" इत्यादि। उत्प्रेक्षायां यथा—"मुखमेणीदृशो भाति पूर्णचन्द्र इवापरः" इत्यादि। वाक्याल-ङ्कारे यथा—"सर्वदा क इव वा सहिष्यते?" इत्यादि। ईषदर्थे यथा—"आवर्जिता किञ्चिदिव स्तनाभ्याम्" इत्यादि ॥ ७४ ॥

चन्द्रेत्यादि।—अभेदान्वयबोधस्थले एव समानविभक्तिकत्वस्य तन्त्रत्वा-दिति भावः ॥ ७५ ॥

उद्देश्येत्यादि।—इह किल "विशेष्यविशेषणयोरेका विभक्तिः समान-

सामानाधिकरण्यं भासते। तेन घटो नील-रूपवान् इत्यत्र घटत्व-नीलरूपयोः सामानाधि-करण्यमवगाहते। एवम् उद्देश्यवाचकपदप्रयोगः प्रागेव कर्त्तव्यः, अन्यथा नीलरूपवान् घट इत्यत्र घटोद्देश्यकनीलरूपविषयकबोधः स्यात्। (७७) किन्तु नीलरूपवदुद्देश्यकघटत्वविषयकबोध एव भवतीति। प्रकृतिविकृतिभावेऽप्ययं नियमो बोध्यः। यथा एको वृक्षः पञ्च नौका भवति इत्यत्र वृक्ष-पदं वृक्षारम्भकद्रव्यपरं, नौका-पदं नौकारम्भकद्रव्यपरम्; तेन वृक्षारम्भकद्रव्यं पञ्चनौकारम्भकं भवतीति बोधः। एवम् एकं सुवर्णं दश कुण्डलानि भवति इत्यत्रापि बोध्यम्। अथ यूपाय दारु इत्यत्र दारु-पदं दार्वारम्भक-

---

लिङ्गता च" इत्युक्तेरतिप्रसङ्गः, तथा हि, एको वृक्षः पञ्च नौका भवति इत्यादौ लिङ्गसङ्ख्यादीनाम् अतन्त्रत्वम्। वस्तुतः,—

"विकारभावे प्रकृतेरेकं कर्म यतस्ततः।
द्विकर्मकव्यवस्थातो न प्रत्ययद्येष्टता॥
प्रकृतेर्विकृतेर्वाऽपि यत्नोक्तत्वं द्वयोरपि।
वाचकः प्रकृतेः सङ्ख्यां गृह्णाति विकृतेर्न तु॥"

इत्युक्तेः "प्रकृतिविकृत्योः प्रकृतिवच्च" इति परिभाषितत्वाच्च विशेषण-पदस्य विशेष्यपदसमानलिङ्गविभक्तिमत्त्वनियमस्य तु प्रकृतिविकृति-भावस्थलातिरिक्त एव विज्ञेयम्॥ ७६॥

किन्तु इति।—तथा हि, "अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत्" इति स्मरणादिति भावः॥ ७७॥

द्रव्यपरं, चतुर्थ्या उद्देश्यत्वं जनकत्वञ्च। तत्र उद्देश्यत्वस्य यूपे, जनकत्वस्य दारुणि अन्वयः; तेन उद्देश्यीभूत-यूपजनक-दार्वंवयवद्रव्यमित्यन्वयधीः। प्रकृतिर्विकाराभावे रन्धनाय स्थाली इत्यादौ तु चतुर्थ्यर्थः केवलमुद्देश्यत्वम्; तेन रन्धनोद्देश्यकस्थालीयमिति बोधः। (७८) इयमेव तादर्थ्ये चतुर्थी।

## अथ उपसर्ग-विचारः।

(७९) तत्र उपसर्गस्य वाचकत्वं नास्ति, किन्तु द्योतकत्वमेव, क्लृप्तशक्तिकधातोरेवार्थविशेषे तात्पर्य्यग्राहकत्वात्। प्रजयतीत्यादौ जि-धातोरेव

---

इयमेवेत्यादि।—उद्देश्यविधेयभावस्थले क्वचित् असति बाधके उद्देश्यताऽवच्छेदकविधेययोः प्रयोज्यप्रयोजकभावोऽपि बोध्यते, यथा:— धनवान् सुखी इत्यादौ सुखरूपविधेये उद्देश्यताऽवच्छेदकधनप्रयोज्यत्वं बोधे भासते॥ ७८॥

तत्रेति।—"द्योतकत्वं" तात्पर्य्यग्राहकत्वम्। उपसर्गस्य द्योतकत्वे प्रमाणं यथा—

"द्योतकाः प्रादयो येन निपातास्चादयस्तथा।
उपास्येते हरिहरौ लकारो दृश्यते यथा॥" इति।

अत्र हि उपासना किम् उपसर्गार्थः? उत विशिष्टस्य? धातुमात्रस्य वा? नाद्यः, तथा सति स्वार्थफलव्यधिकरणवाचकत्वरूपसकर्मकत्वाद्-धातोः उपासनारूपफलवाचकत्वाभावात् ततः कर्मणि लकारो न स्यात्। न द्वितीयः, गौरवात्। तृतीये तु—आगतं द्योतकत्वं, तात्पर्य्यग्राहकत्वलाभात् इति भावः। एवं साक्षात्क्रियते, अलङ्क्रियते,

जये शक्तिः, प्रकृष्टजये लक्षणा, तत्र प्रकृष्ट-जयबोधे प्रोपसर्गस्य तात्पर्य्यग्राहकत्वमात्रम्। अथवा जि-धातोरेव प्रकृष्टजये शक्तिः, सा च प्रोपसर्गोपसन्धानेनैव बुध्यते; तथा च, इयमौप-सन्धानिकी शक्तिः। न च प्रतिष्ठतीत्यादौ प्रकृष्टस्थितिविषयकबोधः कथं न जायते? इति वाच्यम्; तत्र स्थितिविपरीतार्थगमनोपस्थित-त्वात् धातूनां प्रोपसन्धानेनैव तदर्थे लक्षणया शक्त्या वा बोध्यते। अपि च, प्रजयतीत्यत्र यदि प्रकृष्टजये धातोर्न शक्तिः, तदा प्रकृष्टजयाश्रय-त्वेन बोधो न स्यात्, "प्रकृतार्थान्वितस्वार्थ-बोधकत्वं प्रत्ययानाम्" इति व्युत्पत्तेः श्रवणात्।

अथ क्त्वा-प्रत्ययविचारः।

तस्यानन्तर्य्ये एव शक्तिः। भुक्त्वा व्रजति इत्यादौ भोजनानन्तरं व्रजनानुभवस्य सिद्धत्वात् भोजन-व्रजनयोः समानकर्तृकत्वम्। व्रजनपूर्व-काले भोजनं वाऽवगाहते। अनत्कृत्य पतति, मुखं सम्मिल्य हसति, मुखं व्यादाय स्वपिति इत्यादौ पतन-हसन-स्वपनादीनां कथ-

---

उरीक्रियते शिवः इत्यादौ धातोस्तत्तदर्थे लकारसिद्ध्यर्थं तत्तदर्थवाचकत्वं वाच्यमित्युपसर्गवत् द्योतकत्वममीषामस्तीत्यवगन्तव्यम् ॥ ७९ ॥

मानन्तर्य्यम्? पतनानन्तरमेव झनत्कारादुपलब्धेरिति वाच्यम्; (८०) झनत्काराद्यनन्तरमपि पतनादिसत्त्वान्न दोषः इति निष्कर्षः।

अथ नञर्थकथनम्।

तत्र नञः (८१) संसर्गाभावोऽन्योऽन्याभावो वा अर्थः। तत्रायं नियमः,—यत्र विशेष्यविशेषणयोर्भावान्वये अभेदान्वयबोधः, तत्रैवान्योऽन्याभावो नञा बोध्यते। यथा अयं घटो नीलः इत्यत्र भावान्वये नील-घटयोरभेदो भासते। नायं नीलो घटः इत्यत्राभावान्वये घटे नीलभेदो भासते। अत एव "यजतिषु येयजामहं करोति नानुयाजेषु" इत्यत्र अनुयाजभिन्नेषु यजतिष्वेव येयजामहस्य कर्त्तव्यता भासते। यत्र तु प्रतियोग्यनुयोगिनोर्भावान्वये भेदो भासते, तत्र संसर्गाभावो नञा बोध्यते। यथा भूतले घटः, न भूतले घटः, पचति चैत्रः, न

---

झनत्कारेत्यादि।—सत्यं पतनानन्तरमेव झनत्कारादीनामुपलब्धिरिति, किन्तु पतनादिक्रियापरिनिष्पत्तेः पूर्वमपि झनत्कारादिरुपलभ्यते, तदपेक्षया समीचीनमानन्तर्य्यं यथोक्तेषु॥ ८०॥

संसर्गेत्यादि।—असौ किल संसर्गाभावस्त्रिधा, तथा हि—

"प्रागभावस्तथा ध्वंसोऽप्यत्यन्ताभावः एव च।
एवं त्रैविध्यमापन्नं संसर्गाभाव इष्यते॥" इति॥ ८१॥

पचति चैत्रः, चैत्रस्योदनं, न चैत्रस्योदन-मित्यादौ भूतलादावनुयोगिनि घटकृतिस्वत्वानां भावान्वये भेदो भासते। अभावान्वये तेषां संसर्गाभावो बोध्यते; तेन भूतलवृत्तित्वाभाववान् घटः, पाकानुकूलकृत्यभाववांश्चैत्रः, चैत्रसम्बन्धित्वाभाववदोदनमित्यन्वयबोधः। अत्रापि विशेषः,—यत्रानुयोगिनि नामार्थप्रतियोगिकसंसर्गाभाव-बोधः, तत्रावश्यमनुयोगिपदे सप्तम्यपेक्षा कार्य्या। अत्र चाभावान्वये अन्वयिताऽवच्छेदकावच्छिन्न-प्रतियोगिताकत्वं व्युत्पत्त्या भासते। नीलघटवति भूतले न घटः। एवं नीलो घटो न घट इत्य-प्रतीतेः। एवं पीतघटवति न नीलघटः, पीतघटो न नीलघट इत्यादिप्रतीतेश्च।

यत्र तु सामान्ये विधिर्निषेधो वा विशेषे निषेधो विधिश्च, तत्र सामान्यस्य विशेषेतरपरत्वं कल्प्यते। "पदार्थान्तरसाकाङ्क्षं विशेषमपहाय तदितरमेव सामान्यमन्वेति" इति व्युत्पत्तेः। यथा ब्राह्मणेभ्यो दधि दातव्यं, कौण्डिन्याय न दातव्यम् इत्यत्र ब्राह्मणसामान्यस्य कौण्डिन्ये-तरपरत्वं भासते। प्रकृते तु ब्राह्मणसामान्यं दधिदाने साकाङ्क्षं, कौण्डिन्यस्तु तदभावसाकाङ्क्ष

इति सामान्ये तदितरपरत्वं कल्प्यते। एवं ब्राह्मणेभ्यो दधि दातव्यं, तक्रं कौण्डिन्याय इत्यत्र दध्यपेक्षया पदार्थान्तरं तक्रमित्यतो ब्राह्मण-सामान्यस्य तदितरपरत्वं भासते। तेन कौण्डि-न्यस्य ब्राह्मणत्वपुरस्कारेण दधिदानं न प्रसज्येत। अत एवात्र इयं व्युत्पत्तिः विशेषविधिनिषेधयोः सामान्यनिषेधविध्यनुज्ञाफलकत्वमिति। एवं "मा हिंस्यात् सर्वा भूतानि" "आग्नेय्या श्वेतं छागलमालभेत" इत्यत्रापि हिंसासामान्यं निषेध-साकाङ्क्षम्। हिंसाविशेषस्तु विधौ साकाङ्क्षः। अतो हिंसासामान्यस्य वैधेतरपरत्वेन वैधेतरहिंसै-वानर्थहेतुरिति निष्कर्षः। एवं नञः क्वचित् (८२) प्रसज्यप्रतिषेधे शक्तिः, क्वचित् लक्षणया (८३)पर्य्युदासबोधकत्वञ्च। यथा—"एकादश्यां न

---

प्रसज्येति।—"प्रसज्य" प्रसक्तिं सम्पाद्य, आरोप्येति यावत्, "प्रतिषेधः" अत्यन्ताभावे "प्रसक्तं हि प्रतिषिध्यते" इति न्यायेन आरोपितप्रसङ्गस्यैव निषेधः, तेन वायौ रूपं नास्ति इत्यादावपि वायौ रूपारोपं कृत्वैव निषेधो नञा बोध्यते इति विवेकः। तथा च—

"अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता।
प्रसज्य प्रतिषेधोऽसौ क्रियया सह यत्र नञ्॥" इति॥ ८२॥

पर्य्युदासेति।—

"प्रधानत्वं विधेर्यत्र प्रतिषेधेऽप्रधानता।
पर्य्युदासः स विज्ञेयो यत्रोत्तरपदे न नञ्॥"॥ ८३॥

भुञ्जीत" इत्यत्र भोजनस्य रागत एव एकादश्या-मपि प्रसक्तौ तत्प्रतिषेधो बोध्यते। "एकादशी-भिन्नतिथौ भुञ्जीत"इति पर्य्युदासविधिः ; भोज-नस्य केवलरागप्राप्तत्वात् कथं पर्य्युदासः ? द्वितीयं यथा—"अथ श्राद्धममावस्यायां पितृभ्यो दद्यात्" इत्यादि सामान्यशास्त्रं, तदनु "रात्रौ श्राद्धं न कुर्वीत सन्ध्ययोरुभयोरपि"इति विशेषनिषेधस्तु पर्य्युदासविधिः कल्प्यते। तेन रात्रिसन्ध्येतरा-याममावस्यायां पितृभ्यो दद्यादिति पर्य्युदासात् लभ्यते। न तु निषेधविधिना रात्रिसन्ध्याधि-करणकश्राद्धे निषेधोऽवगम्यते, सामान्यश्राद्धस्य रात्रिसन्ध्यांशे कर्त्तव्यताऽऽपत्तेः। एवं "न सगोत्रां न समानार्षेयीं भार्य्यां विन्देत"इत्यादौ यदा च परिवेदनस्य शास्त्रतः प्राप्तिस्तदा पर्य्युदासः। यदा तु रागतः प्राप्तिस्तदा प्रसज्यप्रतिषेध एवाव-गम्यते। केचित्तु "अतिरात्रे षोड़शिनं गृह्णीया-न्नातिरात्रे षोड़शिनम्" इतिवत् अत्रापि इच्छा-विकल्प इति वदन्ति, तन्न ; तत्र नञः तुल्यबल-त्वात् ; अत्र तु सामान्यविशेषभावेनातुल्य-बलत्वादिति निष्कर्षः।

## अथ वैधहिंसा-विचारः।

"मा हिंस्यात् सर्वा भूतानि" इति सामान्य-शास्त्रम्; "वायव्यं श्वेतं छागलम्(८४)आलभेत" इति विशेषशास्त्रम्। अत्र हिंसायां विधि-निषेधयोरवस्थानेन विरोधात् (८५)सामान्यशास्त्रं विशेषशास्त्रेण बाध्यते। विरोधे हि बलीयसा दुर्बलं बाध्यते। (८६) विशेषशास्त्रन्तु बलीयो निरवकाशत्वात्, सामान्यशास्त्रं दुर्बलं सावकाश-त्वात्; तेन सामान्यशास्त्रस्य वैधेतरपरत्वम्। न खलु सर्वभूतहिंसाभावविषयकं कार्य्यम् इति निषेधः, विध्यर्थस्य बाधकं विना अग्नीषोमीय-पश्वालम्भनविषयकं कार्य्यं विध्यर्थं उपपद्यते इति मीमांसकाः। नन्वेवं "श्येनेन अभिचरन् यजेत" इत्यत्र श्येनस्य शत्रुबधरूपेष्टसाधनत्वम् "अभिचारमूलं कर्म च" इति मनुनोपपातकमध्ये पाठादनिष्टसाधनत्वञ्चावगम्यते, तदेतत् कथम्

---

आलभेतेति।—"आलभेत" हन्यादित्यर्थः॥ ८४॥

सामान्येत्यादि।—अत्र हि बलाबलविपालं यथा—सामान्यविधि-रुत्सर्गः, विशेषविधिरपवादः, "उत्सर्गापवादयोरपवादविधिर्बलवान्" इति॥ ८५॥

विशेषेत्यादि।—विशेषविधेरेकदेशमात्रनिर्बन्धतया अनन्यथासिद्धे-रवकाशराहित्यमिति॥८६॥

उपपद्यते ? इति चेत्, न ; "आततायिनमायान्तं हन्यादेवाविचारयन्" इत्येकवाक्यतया आततायिस्थले इष्टसाधनत्वम्, अनाततायिस्थले तु उपपातकत्वेन बलवदनिष्टसाधनत्वमित्यविरोधः कल्प्यते, "पदार्थान्तरसाकाङ्क्षं विशेषम्" इति न्यायात्। तथा च, वैधेतरहिंसाया एव नरकजनकत्वमिति कल्प्यते। टीकाकृद्वाचस्पतिमिश्रमते तु सामान्यविशेषशास्त्रयोर्न विरोधः, भिन्नविषयत्वात्। तथा हि, "मा हिंस्यात्" इति हिंसाया अनर्थहेतुता ज्ञाप्यते। "वायव्यं श्वेतं छागलमालभेत" इति विशेषशास्त्रेण तु हिंसायाः क्रतूपकारकत्वं बोध्यते। (८७)अत एव

अत एवेत्यादि।—अत्र यथाऽऽह कौमुद्यां—"दृष्टवदानुश्रविकः, स ह्यविशुद्धिक्षयातिशययुक्त"इत्यादि। "अविशुद्धिः"सोमयागादौ पशुवीजादिवधसाधनता। यथाऽऽह स्म भगवान् पञ्चशिखाचार्य्यः,—"स्वल्पसङ्करः सपरिहारः सप्रत्यवमर्षः" इति। "स्वल्पसङ्करः" ज्योतिष्टोमादिजन्मनः प्रधानापूर्वस्य स्वल्पेन पशुहिंसादिजन्मना अनर्थहेतुना अपूर्वेण सङ्करः। "सपरिहारः" स्वल्पेनापि प्रायश्चित्तेन परिहर्त्तुं शक्यः। अथ प्रमादतो यदि प्रायश्चित्तादिकं नानुष्ठितं, तर्हि कर्मविपाकसमये च सुतराम् अनर्थम् उत्पादयति। "सप्रत्यवमर्षः" प्रत्यवमर्षेण सहिष्णुतया सह वर्त्तते इति तथोक्तम्। यथोक्तमभियुक्तैः,—"मृष्यन्ते हि पुण्यसम्भारोपनीतस्वर्गसुधामहाह्रदावगाहिनः कुशलाः पापमात्रोपपादितां दुःखवह्निकणिकाम्" इति ॥ ८७ ॥

वैधहिंसाया अपि नरकजनकत्वं क्रतूपकारकत्वञ्च कल्प्यं, न तु स्वर्गजनकत्वं, किन्तु क्रतोरेव स्वर्गजनकत्वं, तत्तद्विशेषविध्यभिधानात् ।

अथ शक्तिनिरूपणम् ।

"तत्तत्पदबोद्धव्यत्व-प्रकारक-भगवदिच्छाविषयत्वं वाच्यत्वम्" इति न्यायलक्षणम् । "अर्थप्रतीत्यनुकूलपदपदार्थसम्बन्धव्यापारः शक्तिः" इति काव्यप्रकाशे । "अर्थप्रतिपादनानुकूलसम्बन्धविशेषः शक्तिः"इति नैयायिकाः । शब्दानां मुख्यव्यापारः शक्तिः, व्याप्रियते अभिधीयते शब्दैरर्थोऽनेनेति । सा च "अस्माच्छब्दादयमर्थो बोद्धव्यः"इति ईश्वरेच्छाविषयत्वम् । आधुनिकसङ्केतिते तु आधुनिकसङ्केत एव शक्तिः, अथवा तत्रापीश्वरेच्छा वर्त्तते । सर्वत्रैव ईश्वरेच्छाविशेष एव शक्तिः इति निष्कर्षः । सा च जातिविशिष्टे एव, जातौ, व्यक्तौ, वैशिष्ट्ये च शक्तिः कल्प्यते, विशिष्टस्यैवान्वयबोधात् । तत्र जातेः प्रकारतया, व्यक्तेर्विशेष्यतया, वैशिष्ट्यस्य संसर्गतया, पदेनोपस्थाप्यता इति नैयायिकाः । नैयायिकमतेऽपि घटत्वविशिष्टे शक्तावपि घटत्वमपि तदर्थः ; तेन स्वार्थादन्यरूपेण ज्ञाते

लक्षणा भवति। केषाञ्चिन्मते तु व्यक्तावेव शक्तिः, जातिरवच्छेदिका व्यक्तेरननुगतत्वात्, जात्यवच्छेदेन व्यक्तौ शक्तिग्रहपदार्थोपस्थितितः शाब्दबोधादिति। मीमांसकास्तु जातावेव शक्तिः, लाघवात्; व्यक्तेरन्वयबोधस्तु जातौ शक्त्यनुभवादेव इति वदन्ति। अथ अकारादिपञ्चाशद्वर्णानां प्रत्येकं कुत्र शक्तिः? न तावत् तेष्वेव, अभेदेनैव वाच्यवाचकभावाभावात्, (८८) किन्तु एकाक्षरकोषोक्तवासुदेवादिष्वेव शक्तिरिति निष्कर्षः। यदा तु पदशक्तिः पदार्थे गृह्यते, तदैव पदशक्तेः पदार्थानामनुभवः, तदनन्तरशाब्दबोधकाले पदश्रवणं, ततः शक्तिस्मरणं, ततः पदार्थस्मरणं, ततः शाब्दबोध इति।

### अथ शक्तिग्राहकनिरूपणम्।

"शक्तिग्रहं व्याकरणोपमान-कोषाप्तवाक्याद्व्यवहारतश्च। वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः॥" तत्रोदाहरणं—

---

किन्त्वित्यादि।—एकाक्षरकोषे प्रत्येकैकशो वर्णानां वाचकत्वं, तथा च दिङ्मात्रमुदाह्रियते,—

"अकारो वासुदेवः स्यादाकारश्च पितामहः।
इकार उच्यते कामो ह्यक्षोरीकार उच्यते॥" इत्यादिवत्। ८८।

व्याकरणेन धातुप्रत्ययप्रकृतीनां शक्तिग्रहो जायते, यथा—पाचक इत्यादिः। उपमा यथा—(८९) गौरिव गवयः इत्यादौ उपमानेन गवय-पदस्य गोसादृश्यविशिष्टे शक्तिग्रहः। कोषेण पर्य्याय-पद-नानार्थपदानां तत्तदर्थेषु शक्तिग्रहो भवति। आप्तवाक्येन यथा—पिकः कोकिलपदवाच्य इत्यादिना कोकिल-पदस्य पिके शक्तिग्रहः। "आप्तश्च" प्रकृतवाक्यार्थगोचरयथार्थज्ञानवान्। (९०) व्यवहारेण यथा—प्रयोजकवृद्धेन घट-मानयेत्युक्तं, तत् श्रुत्वा प्रयोज्यवृद्धेन घट आनीतः,

गोरिवेत्यादि।—गलकम्बलादिशून्यत्वेऽपि गोसदृशबहुलधर्मवत्त्वं गव-यत्वम्। "सादृश्य" हि तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम्; यद्यपि गवये गलकम्बलादि-र्नास्ति तथाऽपि गोसदृशबहुलधर्मवत्त्वमस्त्येव। 'तथा च, केनचिदारण्यकेन ग्रामीणं प्रत्युक्तं—गोसदृशो गवयपदवाच्यः इति। अथ तेनैव ग्रामीणेन कदाचिद्गवयमवलोक्य यदवधारितं गवयोऽयमिति तदेवोपमितिज्ञान-साध्यमिति स्पष्टम्॥ ८९॥

व्यवहारेणेत्यादि।—"लोकानामुपचारः व्यवहारः, तस्मादनुक्तस्यापि ग्रहणस्य सिद्धिर्वेदितव्या" इति दुर्गः। तथात्वं हि निपाताव्ययोप-सर्गकारककालसङ्ख्यालोपादीनामवगन्तव्यम्। तत्रोदाहरणं यथा—हरीतक्यः फलानि। अत्र हि फलेष्वपि स्त्रियां वृत्तिः। खलतिकं वनानि इत्यत्र वनानामेकवचनान्तमेव नाम। शब्दानामेकार्थेऽपि लिङ्गवचनभेदो दृश्यते, यथा—आपो जलम्; दाराः कलत्रं भार्य्या इति। अत्राह दुर्गः,—

'वैदिकालौकिकाश्चैव ये यथोक्तास्तथैव ते।
निर्णीतार्थांस्तु विज्ञेया लोकात्तेषामसङ्ग्रहः॥"॥ ९०॥ इति।

तदवधार्य्यं पार्श्वस्थबालो घटानयनरूपकार्य्यं घटमानयेति शब्दप्रयोज्यमित्यवधारयति। तदनन्तरं पटमानयेति वाक्यात् पटानयनरूपं कार्य्यं, पटमानयेति शब्दप्रयोज्यमित्यवधारयति। तदनन्तरं घटपदं घटे शक्तं, पटपदं पटे शक्तं, घटे द्वितीयाविभक्तिः कर्मतायाम्, आङ्पूर्व-नी-पदमानयने,हि-पदं कृतौ शक्तम् इति विच्छिन्नशक्तिग्रहो व्यवहारेण जायते। वाक्यशेषात् यथा— "यवमयश्चरुर्भवति" इति श्रुतौ यव-पदस्य दीर्घशूकविशेषे शिष्टानां, कङ्गौ च म्लेच्छानां प्रयोगदर्शनात् यवपदार्थसन्देहे—"वसन्ते सर्वशस्यानां जायते पत्रशातनम्। मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः॥" इत्यादिवाक्यशेषाद्दीर्घशूके एव शक्तिग्रहो जायते। विवरणादपि यथा— "विवरणं" शब्दान्तरेण तदर्थकथनं, घटो नास्तीत्यस्य कलसो नास्तीत्यनेन घटपदस्य कलसे शक्तिग्रहः। एवं सान्निध्यादपि यथा—इह सहकारतरौ मधुरं रौति पिकः इत्यत्र प्रसिद्धसहकार-पदसान्निध्यात् पिक-पदस्य कोकिले शक्तिग्रहो जायते।

### অথ শব্দবিচারঃ।

(৫১) স চ দ্বিবিধঃ, বর্ণাত্মকো ধ্বন্যাত্মকশ্চেতি। তত্র বর্ণাত্মক এব সাধুশব্দঃ। সোঽপি দ্বিবিধঃ, বাচকো লাক্ষণিকশ্চেতি। বাচকোঽপি চতুর্বিধঃ,—যৌগিকঃ, রূঢ়ঃ, যোগরূঢ়ঃ, যৌগিকরূঢ়শ্চেতি ভেদাৎ। যত্র সমুদায়শক্তিনৈরপেক্ষ্যেণাবয়বশক্ত্যৈব পদার্থোপস্থিতিঃ, স এব যৌগিকঃ। যথা—পাচকাদিঃ, পাককর্ত্তৃত্বাদিপুরস্কারেণ উপস্থিতিঃ। যত্রাবয়বশক্তিনৈরপেক্ষ্যেণ সমুদায়শক্ত্যৈব পদার্থোপস্থিতিঃ, স এব রূঢ়ঃ। যথা গো-মণ্ডপাদিঃ, মণ্ডপানকর্ত্তরি তু মণ্ডপ-পদং লাক্ষণিকং, দেবগৃহে তু রূঢ়ম্। যত্র তু অবয়বশক্তিসাপেক্ষ্যেণ সমুদায়শক্ত্যা পদার্থোপস্থিতিঃ, স এব যোগরূঢ়ঃ। যথা—পঙ্কজাদিঃ, পঙ্কজনিকর্ত্তৃপদ্মত্বমেব শক্যতাঽবচ্ছেদকম্। যত্র তু কেবলাবয়বশক্ত্যা কুমুদোপস্থিতিঃ পদ্মোপস্থিতির্বা, তত্র পঙ্কজ-পদং লাক্ষণিকমেব। যত্র তু যৌগিকার্থ-রূঢ্যর্থয়োঃ যুগপৎ-স্বাতন্ত্র্যেণোপস্থিতিঃ

---

স চেতি।—বৈয়াকরণমতে তু স শব্দঃ ষড়্বিধঃ। তথা হি—
"মুখ্যো লাক্ষণিকো গৌণঃ শব্দঃ স্যাদৌপচারিকঃ।
যৌগিকো যোগরূঢ়শ্চ শব্দঃ ষোঢ়া নিগদ্যতে॥" ইতি॥ ৫১॥

स यौगिकरूढ़ः। यथा—उद्भिदादिः, तेन युगपदेव उभयशक्त्या उभयोपस्थापकत्वम्। ऊर्द्ध्वभेदन-कर्त्तृत्वरूपेणावयवशक्त्या तरुगुल्मादिः, समुदाय-शक्त्या योगविशेषश्च बुध्यते। स वाचकः पुनश्चतुर्विधो भवति, द्रव्य-गुण-क्रिया-जातिभेदात्। यथा—"डित्थः काष्ठमयो हस्ती, डवित्थस्तन्मयो मृगः" इत्यादौ डित्थ-डवित्थादि-पदं केवलं द्रव्यवाचि, नील-पीतादि-पद गुणवाचि, अध्वग-पाचकादि-पदं क्रियावाचि, घट-पटादि-पदं जातिवाचि।

अथ चतुर्विधवाचकलक्षणम्।

समुदायशक्तिनैरपेक्ष्येण अवयवशक्तिमत्पदत्वं यौगिकत्वम्। यथा—पाचकादिः। अवयवशक्ति-नैरपेक्ष्येण समुदायशक्तिमत्पदत्वं रूढ़त्वम्। यथा—गो-मण्डपादिः। अवयवशक्तिसापेक्ष-समुदायशक्तिमत्पदत्वं योगरूढ़त्वम्। यथा—पङ्कजादिः। स्वतन्त्रोभयशक्तिमत्पदत्वं यौगिक-रूढ़त्वम्। यथा—उद्भिदादिः, ऊर्द्ध्वभेदनकर्त्तृत्वं योगविशेषवत्त्वञ्च बोध्यते।

अथ वाचकलक्षणम्।

साक्षात् सङ्केतितं योऽर्थमभिधत्ते स

वाचकः। अस्यार्थः,—सङ्केतितमर्थं यः "साक्षा-द्भिधत्ते" अव्यवधानेनोपस्थापयति, स एव वाचकः। अस्माच्छब्दादयमर्थो बोद्धव्य इत्युद्देशनं सङ्केतः, तेन ईश्वरसङ्केताधुनिकसङ्केतयोः सङ्ग्रहः। ईश्वरसङ्केतितो घटादिः, आधुनिक-सङ्केतितो मैत्रादिः। लक्षणया तु योऽर्थः समुप-स्थाप्यते स लाक्षणिकः; तेन साक्षात् तस्योप-स्थितिः, मुख्यार्थबाधादिसहकृतत्वात्। वृत्तिः द्विविधा, शक्तिः लक्षणा चेति। शक्तिर्निरूपिता, इदानीं लक्षणा उच्यते। तथा च, लक्षणात्मक-वृत्तिमत्पदत्वं लाक्षणिकत्वम्। सा च लक्षणा यथा—

"मुख्यार्थबाधे तद्योगे, रूढितोऽथ प्रयोजनात्।
अन्यार्थो लक्ष्यते यत् सा लक्षणारोपिता क्रिया॥"

अस्यार्थः,—मुख्यार्थबाध-तद्योगयोः सतोः (सत्त्वात्)रूढिनिमित्तं प्रयोजननिमित्तं वा "यत्" यया वृत्त्याऽन्योऽर्थो "लक्ष्यते" उपस्थाप्यते, सैव वृत्तिर्लक्षणा। सैव च लक्षणा मुख्यार्थसम्बन्ध एव। स च सम्बन्धो यदा पदस्यान्यपदार्थे गृहीतस्तदैव पदसम्बन्धपदार्थानामनुभवः, तदन-न्तरं शाब्दबोधकाले पदश्रवणं, वृत्तिस्मरणं, तया

पदार्थस्मरणं, ततः शाब्दबोधः। सा च क्वचित् रूढ़िहेतुका, क्वचित् प्रयोजनहेतुका च। "आरोपिता क्रिया" आरोपितशब्दव्यापारः। तत्र रूढ़िहेतुका यथा—कर्मणि कुशलः इत्यत्र मुख्यार्थस्य दर्भग्रहणादेव योगे विवेचकत्वादौ च तत्सम्बन्धसत्त्वे कार्य्यनिपुणे लक्षणा "रूढ़ितः" प्रसिद्धेः। यत्र तु पदान्तरसमभिव्याहारं विना केवलकुशल-पदं प्रयुज्यते, तत्रावयवशक्त्या कुश-ग्रहणकर्त्तरि शक्तिरिति बोध्यम्। एवं देव-पद-समभिव्याहारं विना यत्र मण्डप-पदं प्रयुज्यते, तत्र अवयवशक्त्या मण्डपानकर्त्तरि शक्तिरिति बोध्यम्। प्रयोजनहेतुका यथा—गङ्गायां घोषः प्रतिवसति इत्यत्र मुख्यार्थस्य निवासस्यायोगे सामीप्यात्मक-तत्सम्बन्धे सति तीरे लक्षणा शैत्य-पावनत्वादिप्रयोजनात् कल्प्यते। गङ्गातटे घोषः प्रतिवसति इत्यादौ तु तादृशप्रयोजना-नवगतेर्न लक्षणादरः क्रियते। यत्र तु रूढ़िं प्रयोजनञ्च विना लक्षणा क्रियते, तत्र गौणी लक्षणा; यथा—अग्निर्माणवकः, गौर्वाहिक इत्यादौ सादृश्ये लक्षणा। लक्षणाबीजन्तु क्वचि-दन्वयानुपपत्तिः, क्वचित्तात्पर्य्यानुपपत्तिश्चेति।

यथा—मञ्चाः क्रोशन्ति इत्यादौ अचेतनस्य मञ्चस्य क्रोशनान्वयानुपपत्त्या मञ्च-पदेन मञ्चस्थपुरुषे लक्षणा। एवं कुन्ताः प्रविशन्ति इत्यत्रान्वय-सत्त्वेऽपि तात्पर्य्यानुपपत्त्या कुन्त-पदेन कुन्तधरे लक्षणा इति प्राचीनाः। नव्यास्तु सर्वत्र तात्पर्य्यानुपपत्तिरेव लक्षणाया वीजमिति। सा च पुनर्लक्षणा द्विविधा, अजहत्स्वार्था जहत्स्वार्था च। काकेभ्यो दधि रक्ष्यताम् इत्यादावजहत्-स्वार्था; तेन काक-पदं दध्युपघातकपरं, लक्ष्यताऽवच्छेदकदध्युपघातकत्वेन काक-कुक्कुरादि सर्वमुपस्थाप्यते काकपदेन। एवं गङ्गायां घोषः इत्यादौ जहत्स्वार्था एव, तेन गङ्गापदेन तीरमेवोपस्थाप्यते।

## अथ वीप्साविचारः।

तत्र "वीप्सा" व्यापकता, तदभिधाने द्विर्वचनं साधु। तत्र यत्पदस्य द्विरुक्तिः, तदर्थावच्छेदकता-निरूपितसमभिव्याहृतपदोपस्थाप्यपदार्थव्यापकता बोध्यते। यथा—गृहे गृहे अश्वाः इत्यादौ गृह-पदं गृहैकदेशपरं, तेन गृहत्वसमानाधिकरणा-त्यन्ताभावाप्रतियोगित्वमश्वेषु बोध्यते। एवम् "अश्वयुक्-कृष्णपक्षे तु श्राद्धं कुर्य्याद्दिने दिने"

इत्यत्र दिन-पदं तिथिपरम्; तेनाश्वयुक्कृष्ण-पञ्चमीय-तिथित्व-समानाधिकरणात्यन्ताभावाप्रति-योगित्वं श्राद्धे भासते। एवम् "अहरहः सन्ध्या-मुपासीत" इत्यत्र अहः-पदं सन्ध्यावन्दनयोग्य-कालत्रयपरं, तथा च, तत्तत्कालोपाधिमन्निष्ठा-भावाप्रतियोगित्वं सन्ध्यावन्दने भासते।

## अथ शब्दबोधान्तरम्।

आत्मनः पुत्रमिच्छति इत्याद्यर्थे "सुप आत्मनः क्यच्" (३।१।८ पा०) इत्यादिना क्यच्-प्रत्ययः; तेन पुत्रीयतीत्यादि सिद्धम्। तथा च, पुत्र-पदोत्तरक्यच्-प्रत्ययस्य आत्मसम्बन्धिपुत्र-विषयिणी इच्छार्थः। आख्यातस्याश्रयत्वं, तदुपरि आश्रयत्वं संसर्गः, तेनात्मसम्बन्धिपुत्रविषयकेच्छा-श्रयत्वाश्रय इति शाब्दधीः। एवं भार्य्यीयति, पयस्यति, राजीयति इत्यादीनाम् अपि। अत्रैवार्थे काम्यच्-प्रत्ययोऽपि साधुः, तेन पुत्र-काम्यतीत्यादिप्रयोगः आत्मसम्बन्धिपुत्रविषयके-च्छाश्रयत्वाश्रय इति धीः। पुत्रमिवाचरति भृत्यम् इत्यर्थे "उपमानादाचारे" (३।१।१०पा०) इत्यादिना क्यच्-प्रत्ययः; तेन पुत्रीयति भृत्यमिति सिद्धम्। "आचारः" आचरणं, व्यवहार इति

यावत्; तेन भृत्यविषयक-पुत्रतुल्यव्यवहारानुकूलकृत्याश्रय इति शाब्दधीः। एवं खर आत्मानम् अश्वमिव आचरति इत्यर्थे "सर्वप्रातिपदिकार्थेभ्यः क्विप् वा वक्तव्यम्" इत्यनेन क्यङ्-प्रत्ययलोपः; तेन अश्वति खर इति प्रयोगः अश्वतुल्यव्यवहारानुकूलकृत्याश्रयः खर इति शाब्दधीः। एवं प्रभवति भृत्यः, रिपवन्ति मित्राणि इत्यादि सिद्धम्। अधिकरणवृत्त्या आचारेऽपि क्यच्-प्रत्ययः। (८२) प्रासादीयति कुट्यां, पर्य्यङ्कीयति मञ्चके, तेन कुटीरविषयकप्रासादाधिकरणकव्यवहारानुकूलकृत्याश्रय इति शाब्दधीः। वृद्धः शिशुमिवाचरति इत्यर्थे "कर्त्तुः क्यङ् सलोपश्च" (३।१।११पा०) इति क्यङ्-प्रत्ययः; तेन शिशूयते वृद्धः, शिशुतुल्यव्यवहारानुकूलकृत्याश्रय इति बोधः। एवम् एरण्डोऽपि द्रुमायते, काकोऽपि गरुड़ायते इत्यादि सिद्धम्।

अथ एकादिसङ्ख्याशब्दः।

"एकं दश शतञ्चैव सहस्रमयुतं तथा।
लक्षञ्च नियुतञ्चैव कोटिरर्बुदमेव च॥

---

प्रासादीयति इत्यादि।—अत्र
"प्रासादीयति यः कुट्यां पर्य्यङ्कीयति मञ्चके।
तस्य सन्तोषशीलस्य कुभिकाऽप्यप्सरायते॥" इति पद्मनाभः॥ ८२॥

वृन्दं खर्वो निखर्वश्च शङ्खपद्मौ च सागरः।
अन्त्यं मध्यं परार्द्धञ्च दशवृद्ध्या यथोत्तरम् ॥"

तत्राष्टादशशब्दान्तसङ्ख्याशब्दाः सङ्ख्याविशिष्टे एव शक्ताः, केवलसङ्ख्योपस्थितिः लक्षणयैव इति बोध्या। (९३) ऊनविंशत्यादेस्तूभयत्रैव। तत्र विशेषः,—यत्र सामानाधिकरण्येनान्वयः तत्र सङ्ख्याविशिष्टे,यत्र तु वैयधिकरण्येन तत्र सङ्ख्यायामेव। ऊनविंशतिर्ब्राह्मणाः ब्राह्मणानामूनविंशतिरिति बोध्यम्। तत्रापि विशेषः, एषां विंशत्यादिशब्दानामेकवचनान्ततैव। (९४) यत्र तु द्वित्वबहुत्वं तात्पर्य्यविषयं, (९५)तत्र द्विवचनादिकमपि प्रयोज्यम्। एवम् एकादिचतुरन्ता वाच्यलिङ्गतया त्रिषु वर्त्तन्ते, पञ्चादयस्तु सर्वदा अजहल्लिङ्गाः। एवम् एको ब्राह्मणः इत्यत्र जातिपुरस्कारेण

ऊनविंशत्यादेरित्यादि।—"विंशत्याद्याः सदैकत्वे सर्वाः सङ्ख्येयसङ्ख्ययोः" इति कोषवचनात् ऊनविंशत्यादिसङ्ख्याशब्दस्य सङ्ख्येये सङ्ख्याने च शक्तिरवगन्तव्या, एकवचनान्तता च ॥ ९३ ॥

यत्रेत्यादि।—तात्पर्य्यविजयमित्यनन्तरं विंशत्यादिशब्दानामिति शेष. ॥ ९४ ॥

तत्रेत्यादि।—विप्राणां द्वे विंशती भोजयेत्यादौ विंशत्यादिशब्दोत्तरं द्विवचनादिप्रयोगः साधुरित्यर्थः ॥ ९५ ॥

इति श्रीआशुवोधविद्याभूषणविरचिता सारमञ्जरीव्याख्या समाप्ता।

